श्रीः श्रियै नमः

श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता

# बृहदारण्यकोपनिषत्

## पञ्चमाऽध्यायस्य प्रथमं ब्राह्मणम्

**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।।**

सम्प्रति ओंकारप्रणवोपासनां विधातुं परोक्षरूपेण प्रणवस्तुतिं कुर्वन्नाह—

(ओंपूर्णमद इत्यादि) अदः परोक्षः स्वर्गादिरूपो लोक इदमथ च लोकः पूर्णम् वेदेनपूरणम् । सर्वोऽपि भूरादिलोकः शब्दजनितः तथा च श्रुतिर्भवति "स भूरिति व्याहरत् स भूमिमसृजत" इत्यादिना भूरादि लोकानां व्याहृतिजन्यत्वस्य प्रतिपादनात् कारणेन च कार्यं व्याप्तं भवति यथा मृदा व्याप्तो भवति घटस्तद्वत् । पूर्णात् पूर्यमाणलोकात् पूर्णं पूरणकर्तृ उदच्यते उद्गतं भवति श्रेष्ठं भवतीत्यर्थः । अर्थात् पूर्यमाणलोकमपेक्ष्य पूरणकर्तृ व्याहृतिलक्षणः शब्दराशिरुत्कृष्ट इति । ततश्च पूर्णस्य पूर्यमाणलोकस्य पूर्णं पूरणकर्तृ व्याहृतिलक्षणं वस्तु आदाय समादायोपसहृत्येत्यर्थः । तस्यापि यत्पूर्णं पूरणकर्तृ प्रणवात्मकं वस्तु, अवशिष्यते परिशिष्यते "ओंकारेण सर्वा वाक् संतृण्णा" इतिश्रुत्यन्तरात् । ओंकारो हि सर्वव्यापकतया पूर्ण इति स एव कारणं व्याहृत्यादिसर्वशब्देषु निर्दिष्टेषु परिशिष्यत इत्यर्थः । अयमर्थ ओंकारेण हि सर्वा व्याहृतयः समुत्पद्यमाना भवन्ति । व्याहृत्या च गायत्री समुत्पद्यते गायत्र्या च सर्वोऽपि शब्दराशिर्भवतीति साक्षात्परम्परया सर्वशब्दनिदानत्वमोंकारस्य सिद्धयतीति स एव परिशिष्यत इति ।

ॐ ३ खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥१॥

इति बृहदारण्यकोपनिषदि पंचमाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

(ओं खं ब्रह्मेति) खमपरिच्छिन्नं यद्ब्रह्म तदपि ओंकार एव तद्वाचकत्वात्तस्य । एवं चोंकारे अपरिच्छिन्नब्रह्मण उपासनं विधेयमिति भावः । ओंब्रह्मेति ब्रह्मविशेषणीभूतशब्दस्य स्वाभिमतार्थमाह श्रुतिः –

(स्वयमेव ख पुराणमिति) एतावता न वायोरधिकरणमाकाशोऽपि तु यत्पुराणं देशकालादिभिरपरिच्छिन्नं ब्रह्म तदेव व्यापकत्वाद्याकाशसादृश्यात् खमिति पदेन प्रतिपाद्यते । खमित्यस्य देशकालादिभिरपरिच्छिन्नमित्यर्थः ।

(वायुरं खमितीति) कौरव्यायणीपुत्र एतन्नामकः कश्चिदाचार्यो वायुरं खम् । वायोरधिकरणमाकाश भूताकाशमेव ख खमिति शब्देन कथ्यते इति प्रतिपादयति । अपरिच्छिन्नत्वादाकाशसाम्यात् खशब्देन ब्रह्मणः प्रतिपादनेन किन्तु वायोरधिकरणं गगनमेव खमिति पदाभिधेयं भवतीति । एवं चैतन्मते आकाशशरीरकं ब्रह्म प्रणवेऽध्यस्योपास्यमित्याहेत्यर्थः । यद्यपि प्रणवे ब्रह्मोपासनं सर्वसम्मतम् तथापि तत्राध्यास्यमानं ब्रह्म परिच्छिन्नत्वेन गुणेनोपास्यमथवा भूताकाशशरीरकतया उपासनीयमत्रैव केवलमाचार्याणां विवादः सर्वथापि तस्योपास्यत्वं सर्वेषामिष्टमेवेति भावः ।

(वेदोयमित्यादि) यस्मात्कारणात् असौ वेदितेनोंकारेण यद् यद् वेदितव्यं ज्ञातव्यं तत्सर्वमेव वस्तु वेद विजानाति । तस्मात्कारणात् अयमेव वेदः वेदयितृलक्षणयौगिकार्थस्य विद्यमानत्वात्, अन्येषां तु वेदत्वं न मुख्यमित्येव प्रकारेण ब्राह्मणा वेदतत्त्वज्ञानाद्वेदं मन्यन्ते इति ।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

# अथ पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम्

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥१॥

ओंकारो हि सर्वात्मकः सर्वस्यापि ओंकारावयवव्याहृतिप्रभवत्वात् "स भूमिरिति व्याहरत् स भूमिमसृजत" [इत्यादिभ्यः ततओंकारसमुत्पन्नप्रजासु दमादिसाधनत्रयविधानार्थमयमुपक्रमो भवति ।

(त्रयाहः प्राजापत्या इत्यादि) त्रयास्त्रिप्रकारकाः प्राजापत्याः प्रजापतेः कमलासनस्य चतुर्मुखस्यापत्यानि प्राजापत्याः प्रजापतेः साक्षात्परम्परया पुत्रा इत्यर्थः, ते प्रजापतिपुत्राः पितरि जनके प्रजापतौ ब्रह्मचर्यमूषुरुषितवन्तः प्रजापतेः सकाशाद् विद्याग्रहार्थं ते गताः । विद्यार्थिनां गुरुसेवा आवश्यकीति मत्वा गुरुसमीपे ब्रह्मचर्यपूर्वं बहुकालपर्यन्तं निवासं ते कृतवन्त इति भावः । के ते प्रजापतेः पुत्राः पितुः समीपे निवासं कृतवन्तस्तत्राह–

(देवा मनुष्या इत्यादि) देवाः कश्यपपुत्रा इन्द्रपुरोगमाः । मनुष्या ब्राह्मणादयः । असुरा दितिपुत्राः स्वभावतः क्रूरस्वभावविरोचनादयः त इमे बहुकालं यावत्पितुः समीपे ब्रह्मचर्यमुषित्वा ब्रह्मचर्यपूर्वकं निवासं कृत्वा तन्मध्याद् देवाः पितरमूचुरुक्तवन्तः । भवान् पूजावान् नोऽस्मभ्यं यदुपदेष्टव्यं तद् ब्रवीतु कथयतु । एवं देववचनं श्रुत्वा प्रजापतिस्तेभ्यो देवेभ्य एतद्वक्ष्यमाणं द इत्याकारकमक्षरमुवाचोक्तवान् । उक्त्वा चोवाच हे देवाः किं मदुक्तं यूयं व्यज्ञासिष्ट । ममाभिप्रायं भवन्तो ज्ञातवन्तः किमिति पप्रच्छ प्रजापतिरिति भावः । इत्थं प्रजापतिवचनं श्रुत्वा ते देवा ऊचुरुक्तवन्तो व्यज्ञासिष्म । हे पितः ! भवदभिप्रायं वयं ज्ञातवन्त इति । कथं ज्ञातवन्तो यदि ज्ञातवन्तस्तदा तदनुवादं कुरुत तत्राह–

**अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥**

(दाम्यत इति) न आत्थ । हे पितः भवन्तो दान्ता दमविशिष्टा भवत इत्येवमस्मान् प्रति त्वमात्थ वदसीति एवं देवा ऊचुरिति । ततः प्रजापतिः व्यज्ञासिष्ट ज्ञातवन्तो ममाभिप्रायमित्यत्र ओमिति होवाच प्रजापतिः । सत्यं मदभिप्रायं ज्ञातवन्त इत्यर्थः । ननु द इत्युच्चारणमात्रेण दाम्यत इति देवाः कथं ज्ञातवन्त इत्यत्रोच्यते देवा हि विशिष्टैश्वर्यशालित्वाद् भोगेषु प्रतिक्षणं दत्तचित्ततया मदान्धा इव भवन्ति इत्येवं स्वकीय दोषं जानन्तो दशब्दमात्रोच्चारणेनैव तेषां दमविषयिणी प्रतिपत्तिर्जाता इति भावः ॥१॥

(अथ हैनमित्यादि) अथानन्तरं देवप्रश्नप्रतिवचनानन्तरम् एनं प्रजापतिं पितरं मनुष्याः पुत्रा ऊचुरुक्तवन्तः भवान् नोऽस्मभ्यं मनुष्येभ्यो यदुपदेष्टव्यं तद्ब्रवीतु कथयतु इति तदनन्तरं प्रजापतिः तेभ्यो मनुष्येभ्य एतदेवाक्षरं द इत्याकारकमुवाचोक्तवानवोचत् व्यज्ञासिष्ट किं मदभिप्रायं यूयं व्यज्ञासिष्ट ज्ञातवन्त इति । ततो मनुष्या ऊचुर्व्यज्ञासिष्म ज्ञातवन्त इति । दत्त इत्येवं त्वमात्थोक्तवानसि दत्त हे मनुष्या दानं ददत । तत ओमित्यनेन सत्यं व्यज्ञासिष्ट ज्ञातवन्त इति प्रजापतिरवोचदिति ॥२॥

(अथ हैनमसुरा ऊचुरित्यादि) अथ मनुष्यप्रश्नप्रतिवचनानन्तरं ह एनं प्रजापतिं पितरमेत्यासुरा विरोचनादयः प्रोचुः । हे पितः मह्यं यदुपदेष्टव्यं तदुपदिश ततः पिता तदेव द इत्याकारकारकमक्षरमुपदिष्टवान् उपदिश्य चोवाच भो असुरा ममाभिप्रायस्य परिज्ञानं जातं, ततस्ते असुराः प्रोचुर्जात-

**अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षर**

न्तो वयम् । किमिति पुनः प्रजापतिना पृष्टा ऊचुः हे पितः भवदभिप्राय इत्थं यत् द इति वक्तव्यस्य वस्तुन एकदेशेन दयेत्यस्य मां प्रत्युपदेशः । वयं सर्वदैव तामसप्रकृतित्वात् प्राणिहिंसायामेव प्रवृत्ताः स्म ततस्तादृशक्रूर-कर्मपरित्यज्यात्मवत् सर्वभूतेषु व्यवहारकरणाय दयाया उपदेशं दत्तवान् भवानिति भवतोऽभिप्रायस्य ज्ञानमस्माकं जातम् । ततः प्रजापतिनोक्तं सत्यं मदभिप्रायज्ञा भवन्तो जाता इति । ननु एकस्माद् दकारोच्चारणात् कथं विभिन्नदमदानदयाविषयकं ज्ञानं बहूनां जातमिति चेदत्रोच्यते । यथागगनविनिर्मुक्तं जलमेकस्वभावकमपि तत्तत्पृथिवीविकारानासाद्य ति-क्तकटुमधुरादिभेदेन भिन्नं भवति । तत्कस्य हेतोः आधारस्यानेकविधत्वात् । तत्तन्माहात्म्येन तत्तत्प्रकारको रसभेदो भवति । एवं प्रकृते दकारमात्र-स्योच्चारणं प्रजापतिमुखाज्जातं न तु अमुकावयविनोऽयमवयवभूत इति न कथितम् किन्तु स्वभावतः सत्वबहुला देवाः प्रजापतिसहवास-बलेनात्यन्तविशुद्धाः संसारसाधनव्यतिरिक्तमोक्षसाधनभूतदमस्यैवायं दकारोऽवयव इति परिकल्प्य दमोपदेशं मामुपदिशतीति निश्चयं कृत्वा तद-नुष्ठाने प्रयत्नसंलग्ना अभवन् । एवं ततो हीनो मनुष्यो दानस्यायमवयवभूतो दकार इति परिकल्प्य दानोपदेशं मे कृतवानिति प्रतिपेदे । इदं दान फलोद्देशेन क्रियमाणं संसाराय भवति तदेव दानं निष्कामबुद्ध्या क्रियमाणं परम्परया मोक्षजनकमपि भवति । असुरास्तु स्वभावतस्तमोबहुला अपि प्रजापतिसहवासात् किंचित् शुद्धान्तःकरणा भवन्तो दयावयवभूतोयं दकार इति परिकल्प्य दयामेव प्रतिपेदे । तत्र दमो मोक्षसाधनं दानमुभयसाधनं प्रकारभेदाद् दया तु संसारसाधनमिति क्रमशोधिकारिभेदेन न सर्वेषां पृथक् पृथग् ज्ञानमभूत् । सत्यप्युपदेशसमानेपि इति भावः । विशेषत एतद्विवरणं स्थलान्तरे द्रष्टव्यम् ।

मुवाच द इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयं शिक्षेद्दमं दानं दयामिति ॥३॥

इति बृहदारण्यकोपनिषदि पंचमाध्यायस्य
द्वितीयं ब्राह्मणम् ॥२॥

# अथ पंचमाध्यायस्य तृतीयं ब्राह्मणम्

एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरं हृदयमिति

(तदेतदेवैषेत्यादि) तदेतत् त्रितयं दान्ता भवत दानं कुरुत दयां पालयत ।

(कुरुत) इति दमदानदयालक्षणांस्तनयित्नुर्जलदो ददद इति दकारत्रयोच्चारणेनानुवदति सैषा दैवी देवस्य प्रजापतेर्वाक् न तु मेघस्य मेघो हि प्रतिवाक्यं सर्वदा लोकेभ्यः श्रावयति । दैवीवाच एवानुवादं करोतीति भावः।

(तदेतत्त्रयमित्यादि) यस्मात्कारणाद् दमादि एतत्त्रितयं प्रजापतेरुपदेशात्मकं तस्मात्कारणादद्यापि एतत् त्रितयं दमदानदयालक्षणं धर्मत्रयं शिक्षेत् दमं दानं दयाम् उपाददीत । जगत्स्रष्टकस्य प्रजापतेरनुशासनमस्माभिरवश्यमेवानुष्ठेयमित्येवं बुद्धिं सर्वदेव कुर्यात् । तथा च भगवद्गीतावाक्यम् "त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथालोभस्तस्मादेतत् त्रयं त्यजेदिति ॥३॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये पञ्चमाध्यायस्य
द्वितीयं ब्राह्मणम् ॥२॥

दमनीय द्वितीयब्राह्मोक्त प्रकारेण सामान्यतः सर्वोपासनान्

द इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद य इत्येकमक्षरं ...न्त्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं

दमदानदयालक्षणपदार्थत्रयमुद्दिश्य ब्रह्मोपासनाङ्गभूत हृदयस्योपासनां दर्श-यितुमुपक्रमते ॥

( एष प्रजापतिरित्यादि ) एषः प्रजापतिः यः खलु इतः पूर्वं दमदानदयोपदेशकतया प्रक्रान्तो योपि प्रजापतिः सोपि प्रजापतिः हृदयमेव तदेतद् ब्रह्म बृहत् व्यापकं सर्वं सर्वलक्षणम् । एतावता हृदयस्य सर्वत्व प्रदर्शितं भवतीति । एवं हृदयस्य प्रजापतित्वबृहत्वादिलक्षणविशेषणयुक्त-तया तदुपासनां दर्शयित्वा उपास्यहृदयस्य हृदयशब्दनिर्वचनद्वारेण स्तुतिं कुर्वन्नाह--

( तदेतत् अक्षरमित्यादि ) हृदयमिति अक्षरत्रयम् हृ, द, यमित्या-कारकाक्षरत्रयस्य समुदायरूपम् । तदेकदेश हृ इत्यस्य य उपासक उपासनां करोति तस्मै उपासकाय स्वा ज्ञातयोऽन्येपि बलिमाहरन्ति, अयमर्थः, यथा हृदयसम्बन्धिनः स्वा इन्द्रियाणि चक्षुरादीनि अन्ये रूपादिकाः स्वकीय स्वकीयं कार्यं हृदयाभिहरन्ति अर्थात् हृदयाधीनाः सन्तः स्वस्वकार्यं कुर्वन्ति तद्वत् उपासकायापि स्वज्ञातयोऽन्येपि च बलिमाहरन्तीति ।

( द इत्येकमक्षरमित्यादि ) यस्मात् कारणात् हृदयाय ब्रह्मरूपाय स्वा इन्द्रियाणि अन्ये च विषया रूपादिकाः स्वकीयं स्वकीयं वीर्यं ददति प्रयच्छति । अतो दानार्थकधातोर्निष्पन्नो दकार एतादृश इति यो जानाति तमुपास्ते तस्मै स्वा ज्ञातयोन्ये चापि स्वं स्वं बलं ददति इति हृदयैकदेश दकारस्य माहात्म्यमिति । तथा हृदयमिति पदघटकं यमित्यक्षरम् । ...यमर्थस्येणोरूपम् । एतादृशं यमित्यक्षरं हृदयनाम्नि विद्यते एवं य

स एवं वेद ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
तृतीयं ब्राह्मणम् ॥३॥

# अथ पंचमाध्यायस्य चतुर्थं ब्राह्मणम्

तद्वै तदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमांल्लोकान् जितइन्वसावसद्य एवमेतं महद्यक्षं

उपासको वेद विजानाति स उपासकस्तादृशोपासनाबलात् स्वर्गलोकमेति प्राप्नोति-हृदयपदघटितयमित्यस्योपासनया स्वर्गलोकप्राप्तिर्भवत्युपासकस्येत्यर्थः। यद्वं नामाक्षरादपि उपासकस्य विनिष्टं फलं भवति तदा कांश कथा हृदयस्वरूपोपासनादिति हृदयस्तुत्यर्थं नामाक्षरस्य कथनं कृतमिति भावः ॥१॥

इति बृहदारण्यकोनिषदि आनन्दभाष्ये पञ्चमाध्यायस्य
तृतीयं ब्राह्मणम् ॥३॥

इतः पूर्वब्राह्मणे हृदयस्य प्रजापतिरूपेणोपासनं दर्शयित्वा तस्यैव हृदयस्य सत्यत्वेन रूपेणोपासन दर्शयितुमुपक्रमते—

( तद्वै तदेतदित्यादि ) तद्वै इत्यत्र वै शब्दोऽवधारणार्थकः। तत् पूर्वब्राह्मणोक्तहृदयमेवैतत् तदा स एतद्वक्ष्यमाणं तदा बभूवेत्यर्थः। किं तत् पूर्वं बभूव तत्राह—

( सत्यमेवेति ) सच्च त्यच्च मूर्तममूर्तञ्च सत्यम् अव्याकृतपञ्चभूतलक्षणं भवतीत्यर्थः। तादृशसत्योपासनस्य फलं दर्शयति—

( स य इत्यादि ) स य उपासक एतद् हृदयं महत् महत्त्वगुणयुक्तमत एव यक्षं पूजार्हम् प्रथमजं प्रथमोत्पन्नम् सर्वस्मादपि कार्यवर्गात् पूर्वकाले एव समुत्पन्नं सत्यमव्याकृतपंचभूतलक्षणं ब्रह्म बृहत् इति यः

प्रथमजं वेद सत्यं ब्रह्मेति सत्यं ह्येव ब्रह्म ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
चतुर्थं ब्राह्मणम् ॥४॥

# अथ पंचमाध्यायस्य पंचमं पञ्चमं ब्राह्मणम्

**आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म**

कश्चिद् एतत् हृदयं वेद विजानाति तदुपासनं करोतीत्यर्थः। स उपासक इमान् प्रत्यक्षविषयीकृतान् लोकान् जयति, तथा जितो वशीकृतश्चोक इनु इत्थमसौ शत्रुर्ब्रह्मणा जितोऽसद् भवे। असत्कल्पो भवेदित्यर्थः। तस्यैतदेव फलमिति पुनरपि निगमयति—

( य एवमेतदित्यादि ) य एवं महद्यक्षं पूज्यं प्रथमज प्रथमोत्पन्नमुपास्ते सत्यं ब्रह्मेति बुद्धया तादृगोपासकस्य शत्रौ असत्त्वमावश्यकमेव। यस्मात् कारणाद् अयं सत्यस्योपासकः तस्मात् कारणात् सत्योपासकस्य सत्वं तद्विरोधिनोऽसत्कल्पत्वमावश्यकमेवेति भावः ॥१॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये पंचमाध्यायस्य
चतुर्थं ब्राह्मणम् ॥४॥

सत्यस्य ब्रह्मणः स्तुत्यर्थं महद्यक्षं प्रथमजमिति इतः पूर्वब्राह्मणे कथितम् तस्य कथं प्रथमजत्वमित्याकांक्षायां तस्य प्रथमजत्वप्रदर्शनार्थमिदमुपक्रमते—

( आप एवेदमग्रे इत्यादि ) इदं व्याकृतं नामरूपाभ्यां प्रपंचितं फलपुष्पाभ्यां समन्वितवृक्षवत् अवस्थितम् अग्रे ब्रह्माण्डोत्पत्तेरपि पूर्वकाले आप एवासुरव्याकृतपंचभूतात्मनैवावस्थितं बभूव। जगदुत्पत्तेर्बीजभूतं ...कारोपसृष्टं, यद्जलं तदात्मकमेव बभूव। तदा तदन्यत् विकारजातं

ब्रह्म प्रजापतिं प्रजापतिर्देवांस्ते देवाः सत्यमेवोपासते तदेतत्त्र्यक्षरं सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः

किमपि नाभूदिति ता आपो जगतो बीजभूताः सत्यं पंचीकृतपंचभूतलक्षण कार्यजातमसृजन्त सर्वं विकारजातमुत्पादयामासुः । किमाकारकं तत्सत्यं यमुत्पादयामासुरापः इत्यत आह-सत्यं ब्रह्मेति । तस्मात्सत्यं ब्रह्म प्रथमजम् चतुर्मुखं कमलासनलोकाधिपमसृजन्त इत्यर्थः । ब्रह्म प्रजापतिम् तत् प्रथमजो ब्रह्मा चतुर्मुखः प्रजापतिं दक्षादिकमसृजत । अयमाशयः चतुर्मुखः प्रथमजः पुरा स्वि मानसान् सनकादीन् उत्पाद्य यदा तान् सृष्टिकरणायाज्ञापयामास तदा ते गुरुवाक्यमप्यनादृत्य विशुद्धान्तःकरणत्वात् निवृत्तिमगमे । गृहीतवन्तः अतः प्रथमजो हताश इव दक्षादीनुत्पादयामास ते च पितुराज्ञामासाद्य प्रवृत्तिमार्गमासाद्य प्रजोत्पत्तिलक्षणकार्ये संलग्ना अभवन् तेन तेऽपि प्रजापतिसंज्ञकाः प्रजोत्पादकत्वेनाभवन्निति पुराणवार्तेति । ततः प्रजापतिर्देवानिति तदनन्तरं प्रजापतिमध्यात् कश्यपः प्रजापतिर्देवानिन्द्रादिकान् अदितिसंज्ञकभार्यातोऽसृजतेति ।

( ते देवा सत्यमेवेत्यादि )ते देवा इन्द्रादयः परम्परया सत्या कमलाधिपाज्जायमानाः सत्यमेव उपासते सत्यस्यैव जनकस्य सर्वजगत्सञ्चालकस्यैवोपासनां कुर्वन्ति, तदेतत्सत्यं त्र्यक्षरम् अक्षरत्रयस्य सङ्घातरूपम् तत्र प्रथमं स इत्याकारकमक्षरम् द्वितीयं त इत्याकारकम् तृतीयन्तु यमित्याकारकम् तदेव सकार तकार यकाराक्षरैर्मिलितमेव सत्यमिति, अत्र तीत्येकमक्षरमित्यत्र तीतीकारानुबन्धो निर्देशमात्रार्थकः । तत्र प्रथमोत्तमे अक्षरे सत्यम् तत्र प्रथममक्षरं प्रथमो वर्णः सकार उत्तमाक्षरम् अन्तिमो वर्णो यकार एतौ द्वौ सत्यं सत्यमेव नानृतम् मृत्युरूपाभावात् सकारयकारयोर्मृत्युलक्षणतो रहितत्वादित्यर्थः । एतादृशं वैलक्षण्यं तकारे नास्तीति दर्शयति

सत्येन परिगृहीतं सत्यभूयमेव भवति नैनं विद्वान् समनृतं हिनस्ति ॥१॥

तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योऽन्यस्मिन्प्रतिष्ठितौ रश्मिभिरे

( मध्य त इत्यादि ) मध्यतो मध्ये सकारतकारयकाराणां मध्ये मध्यभागे विद्यमानस्तकारोऽनृतमृतमेव मृत्युः । कथमनृतं मृत्युरित्युच्यते मृत्युमध्येपि तकारो विद्यते अनृतेपि तकारो विद्यते इति तकारस्योभयत्रापि तकारस्य विद्यमानत्वेनोभयोः साम्यं समत्वात् मृत्युअनृतयोरपि समानत्वम् । यथा अवयवसाम्येन भ्रातृभगिन्योः सादृश्यं यथा गोगवयोस्तथैव अकृतेपीति ।

(तदेतदनृतमित्यादि) तदेतदनृतं सकारयकारयोर्मध्ये तिष्ठ तकारात्मकमुभयतः पार्श्वाभ्याम् स सत्येन सत्यलक्षणेन सकारयकारेण च परिगृहीतं युक्तं सत् सत्यभूयमेव भवति सत्यबाहुल्यमेव भवति । उभयपार्श्वस्थितसकारयकारपरिवेष्टनात् तदपि सत्यलक्षणमेव भवतीति । एवं सत्यबाहुल्यं सर्वस्य मृत्योरनृतस्याकिंचित्करत्वं च य उपासको जानाति यस्त्वेवंभूत विद्वांसम् अनृतं कर्तृ प्रमादिभ्यो जनित्तं कदापि कथमपि न हिनस्ति न बाधते इति भावः ॥१॥

एवं यथोक्तप्रकारेण सत्ये हृदयोपासनं प्रदर्श्य ततः परं सत्यत्वेनैवादित्यमध्यव्यवस्थितस्य ब्रह्मणः सर्वविकारसाहित्यात्मकसत्यत्वेन व्याहृतिशरीरकतया चोपासनां दर्शयितुमुपक्रमते—

( तद्यत्तत्सत्यमित्यादि ) तत् यत्सत्यं प्रसिद्धम् पूर्वोक्तप्रकारेण असौ स आदित्यः सर्वलोकस्य [illegible] सविता सूर्यः स आदित्यः कस्तत्राह—

(य एष इत्यादि ) य एष एतस्मिन् परिदृश्यमाने तेजोमण्डले

**योऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन् स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥२॥**

पुरुषः पुरुषाकारः स आदित्यः स एव सत्यम् तथा यश्चायं दक्षिणे अक्षन् दक्षिणे नेत्रे गोलकाभ्यन्तरे परिदृश्यते पुरुषाकारः स एष आदित्यः "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" "य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इति श्रुतिप्रसिद्ध इति ।

( तावेतावित्यादि ) तौ एतौ आदित्यचाक्षुषपुरुषावुभावपि अधिदैवताध्यात्मभेदेन व्यवस्थितौ प्रतिष्ठितौ । अन्योन्यस्मिन् परस्परमुपकारकौ भवतः । तत्र एष आदित्यमण्डलवर्तिपुरुषः स्वरश्मिभिः स्वकीयकिरणद्वारोपकारमादधाति । अयं चाक्षुषस्तु पुरुषः प्राणैः प्राणापानक्रियाद्वारोपकारको भवति । अयं भावः अधिदैवताध्यात्मभेदेन व्यवस्थितौ आदित्यमण्डलवर्त्ती चक्षुषि वर्तमानश्चपुरुषौ परस्परमेकोऽपरस्योपकारकौ भवतस्तत्रादित्यमण्डलवर्तिपुरुषः स्वकीयकिरणद्वाराचाक्षुषस्योपकारं सम्पादयति । यदि कदाचित् आदित्यो नोपकुर्यादेनं तदा सूर्यकिरणसम्बन्धाभावे परमात्मलक्षणचाक्षुषपुरुषस्य स्वकार्यसामर्थ्याभाव आपतेत् आलोकसम्बन्धमन्तरेण चाक्षुषाभावात्, चाक्षुषस्तु पुरुषः प्राणापाननादिद्वारा आदित्यपुरुषस्योपकारको भवति अन्यथा प्राणननाद्यभावे आदित्यपुरुषे प्रकाशकत्वस्यैवासम्भवात् । न हि प्राणादिक्रियारहितस्य प्रकाशकत्वं संभवतीति । सम्प्रत्युपासकस्य यथोक्तोपासनायाः फलं दर्शयितुमाह—

( स यदोत्क्रमिष्यन्नित्यादि ) स उपासकः पुरुषो यदा यस्मिन्काले उत्क्रमिष्यन् शरीराद्बहिर्गन्तुमिच्छति । मरणसमय इत्यर्थः । तदा शुद्धं सर्वतो विशुद्धं द्वारभूतमेतद् आदित्यमण्डलं तेजोभिराकीर्णम् पश्यति द्रष्टुं शक्नोति द्रष्टुं समर्थो भवति । यथा आदित्यमण्डलदर्शनायेदानीं सूर्य

य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा

रश्मयो विघ्नाय भवन्ति न तथा तदानीमादित्यरश्मय आदित्यस्थे किरणाः प्रतिघाताय चाक्षुषप्रत्यक्षे प्रतिबन्धका न भवन्ति । चाक्षुषादित्यमण्डलस्थपुरुषयोः परस्परमुपकार्योपकारकभावज्ञानसामर्थ्यादिति ॥२॥

( य एष एतस्मिन्नित्यादि ) एतस्मिन्प्रत्यक्षत उपलभ्यमाने मण्डले आदित्यमण्डले य एष प्रत्यक्षदृष्टः पुरुषः पुरुषाकारः तस्यादित्यमण्डलस्थपुरुषस्य भूरिति भूरित्याकारिका गायत्र्यवयवभूता व्याहृतिर्वर्णविशेषलक्षणा शिरःस्थानीयः तस्मिन् शिरोबुद्धिरिति कृत्वा तद्ध्यान कर्तव्यम् । तस्य पुरुषस्य भूरिति शिर एवं ध्याता ध्यायेत् । कथं भूरित्यस्मिन् शिरोबुद्धि कुर्यात् तत्रोपपत्ति दर्शयितुमाह–

( एकं शिर इत्यादि ) यतः शिरो मस्तकमेकम् एकत्वसंख्याविशिष्टम् । एतद् भूरित्यक्षरमपि एकमेकत्वसंख्याविशिष्टम् । उभयत्राप्येकत्वसंख्यायाः समानत्वात् इति संख्यासामान्यात् भूरित्यक्षरे शिरोबुद्धि कुर्यादिति । भुव इति बाहू आदित्यमण्डलस्थपुरुषस्य व्याहृत्यात्मकम् भुव इत्यक्षरम् बाहू हस्तस्थानापन्नम्, तत्रोपपत्ति दर्शयितुमाह–

( द्वौ बाहू इत्यादि ) बाहू द्वौ भवतः भुव इति अक्षरेपि द्वे द्वित्वसंख्याविशिष्टे यथा बाहो द्विवचनं तथा भुव इत्यक्षरयोरपि द्वित्वमिति द्वित्वसंख्याया उभयत्र समानत्वात् । भुव इत्यक्षरे व्याहृतिलक्षणे आदित्यमण्डलस्थपुरुषस्य बाहू इति बुद्धि कृत्वा ध्यायेदिति ।

(स्वरितीत्यादि) आदित्यमण्डलपुरुषस्य स्वरिति प्रतिष्ठापादावित्यर्थः प्रतिष्ठितो भवति याभ्यां सा प्रतिष्ठा पादाविति । अत्राप्युपपत्ति दर्शयति ।

द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥३॥

योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति

(द्वे प्रतिष्ठे इत्यादि) द्वे द्वित्वसंख्याविशिष्टौ पादौ द्वौ भवतः तथा स्वरित्यक्षरेऽपि द्वे द्विसंख्याविशिष्टे भवत इति संख्यासामान्याद् स्वरित्यत्र पादबुद्धिः कर्तव्येति । तस्यादित्यमण्डलपुरुषस्याहरित्युपनिषत् रहस्यनामेति । अहरितिरूपं न हन् धातोर्भवति न वा ओहाक् त्यागे इत्यास्यातस्तदनुसारेण फलं दर्शयति ।

( हन्तीत्यादि ) य उपासक आदित्यमण्डलस्थपुरुषस्याहरिति रहस्यनामेति वेद विजानाति स पाप्मानं दुरदृष्टं हन्ति विनाशयति जहाति परित्यजति च संसारप्रयोजकं कर्म इति ॥३॥

आदित्यमण्डलस्थपुरुषस्य भूरित्यादि मस्तकाद्यवयवं प्रदर्श्य चाक्षुषपुरुषस्य तदर्शयितुमाह—

( यो यं दक्षिणेऽक्षन्नित्यादि ) यो य दक्षिणे अक्षन् दक्षिणनेत्रेऽवस्थित पुरुष प्रतिबिम्बरूपेण परिदृश्यमानः परमात्मा सर्वलेपरहितत्वात् । तस्य दक्षिणनेत्रगतस्य पुरुषविधस्य भूरिति गायत्र्या अवयवलक्षणव्याहृतिरेव शिरो मस्तकम् । तत्रोपपत्ति दर्शयति—

( एकमित्यादि ) यतः शिरो मस्तकमस्मिन् हस्तपादादिसंघातलक्षणशरीरे एकमेव भवति व्याहृतौ भूरित्येकमक्षरमप्येकमेवेति एकत्वसंख्याया उभयत्र समानत्वात्तेन रूपेण सादृश्यमादाय ध्याता तत्र तथा ध्यानं कुर्यात्, भुव इति बाहू, तत्र द्वित्वसंख्यासामान्याद् बाहावपि द्वित्वम् । भुव रित्यक्षरयोरपि द्वित्वमिति स्वरिति प्रतिष्ठापादावित्यर्थः ।

अक्षिण्यक्षि प्रतिष्ठे हं हं एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एव वेद ॥४॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
पञ्चमं ब्राह्मणम् ॥५॥

# अथ पंचमाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

**मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा**

तस्य नेत्रगतपुरुषस्याहरित्युपनिषत् रहस्यनामधेयम् एवं प्रकारेण य उपासको वेद विजानाति। स पाप्मानं हन्ति विनाशयति जहाति परित्यजति पाप्मानमिति ॥४॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
पञ्चमाध्यायस्य पञ्चमं
ब्राह्मणम् ॥५॥

अथ प्रकृतः पुरुष आत्मा मनोमयः मनसा अन्तःकरणेनोपलभ्यमानत्वात् शुद्धमनोग्राह्यः "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश" 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" "मनसैवेदमाप्तव्यम्" इत्यादिश्रुत्यन्तरेण शुद्धमनसा ग्राह्यत्वमात्मनः प्रतिपादितं भवति। नैयायिकादयः सर्वेपि दार्शनिका शुद्धमनोग्राह्यत्वमस्य कथयन्ति। अतोऽयं मनोमयः शुद्धेन मनसा ग्रहणविषयः भाः प्रकाशरूपो दीप्त्यर्थकस्य धातोर्निष्पन्नभासः प्रकाशार्थकत्वात् "मनोमयः प्राणशरीरो भारूप" इत्यादि श्रुत्यन्तरात् सत्यमिति सत्यं सर्वविकाररहितः शरीराश्रितजन्ममरणादिविकारेण रहितः सत्यपि देहविनाशे, तस्मिन् अन्तर्हृदये हृदयस्य मध्येऽवस्थानात् हृदयोपाधिकाल्पपरिमाणवात्

व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

# अथ पंचमाध्यायस्य सप्तमं ब्राह्मणम्

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्युत्येनं पाप्मानो य एवं वेद

यथा व्रीहिर्वा यवो वा। यथा व्रीहियवादिकः स्वभावेनाल्पपरिमाणवान् अयन्तु हृदयोपाधिकाल्पपरिमाणवानित्यर्थः स एष परमात्मा सर्वस्यापि जडचेतनस्येशानः स्वामी। तत्र स्वामित्व न पराधीनं तत्राह सर्वस्याधिपतिः परिपालयिता परिपालने इतरानपेक्ष इत्यर्थः। यदिदं किंचिज् जडचेतनात्मकं तस्य सर्वस्यापि प्रशास्ति प्रशासकः "एतस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत" इति श्रुतेः प्रशासनेन धारकत्वं व्यंजितम्। एतावता सर्वनियन्तृत्वं धारकत्वं शेषित्वमपि उक्तमेव भवति इति भावः ॥१॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
पचमाध्यायस्य षष्ठ ब्राह्मणम् ॥६॥

लोकदृष्टया प्रकाशातिशयविशिष्टायां विद्युति ब्रह्मदृष्टिं विधातुमाह-

( विद्युद् ब्रह्मेत्यादि ) विद्युति प्रकाशशीले वस्तुविशेषे ब्रह्मदृष्टि-ब्रह्मध्यानं कर्तव्यमित्येके आचार्या उपासनामर्मज्ञा आहुः कथयन्ति। कथं विद्युति ब्रह्मदृष्टिः कर्तव्येति ब्रह्मध्यानकारणीभूतं विद्युति सादृश्य दर्शयितुमाह-

( विदानादित्यादि ) विदानाद् विदारणात्। खण्डनादिति यावत् विद्युत् विद्युद् हि तमालमालावदलिश्यामलमेघमण्डलस्थिततम.पटलं

विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
सप्तमं ब्राह्मणम् ॥७॥

## अथ पञ्चमाध्यायस्याष्टमं ब्राह्मणम्

**वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति**

स्वोदयसमये एव विनाशयति, ब्रह्म तु विलक्षणवृत्त्यारूढं भवत् अज्ञानलक्षणान्धकारं प्राणिनां संसारनिदानं विनाशयति ततो ब्रह्मसादृश्यस्य प्रकाशातिशयस्य विद्युति वर्तमानत्वेन भवति विद्युतिब्रह्मदृष्टिरिति । यो हि विद्वानुपासकः यथोक्तसादृश्येन विद्युति ब्रह्मदृष्टिं करोति तमेनं विद्वांसं पाप्मानो विद्यति । एनमुपासकं प्रति ये प्रतिकूलाः भगवद्भक्तिविघातकाः पाप्मानो दुरदृष्टास्तान् सर्वानेव विद्यति विशेषेण द्यति खण्डयति विद्युति ब्रह्मदृष्टिकरणात् सर्वे पाप्मानो निवृत्ता भवन्ति । यथा धनेन सुखीत्यत्रसुखात्मकविधेये उद्देश्यतावच्छेदकधनप्रयोज्यत्वं सिध्यति । एवं पापविनाशने उद्देश्यतावच्छेदकब्रह्मदृष्टेः प्रयोजकत्वमुपपद्यते । एतस्मिन्नर्थे उपपत्तिं दर्शयति ।

( विद्युद्ध्येव ब्रह्मेति ) हि यतो ब्रह्मणो विद्युत्त्वात् अज्ञानतमःखण्डकत्वात् ततो ब्रह्मैव विद्युदिति भावः ॥१॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
पञ्चाध्यायस्य सप्तमं ब्राह्मणम् ॥७॥

विद्युति ब्रह्मदृष्टिं विधाय तद्वद्देवोपासनान्तरं विधातुमाह–
( वाचमित्यादि ) वाचं त्रयीलक्षणां धेनुमुपासीत धेनुरिति बुद्ध्या

**स्वाहाकारं च वषट्कारञ्च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥१॥**

तदुपासनं कुर्यात् । धेनुसादृश्यं वाचो दर्शयति ।

( तस्याश्चत्वार इत्यादि ) तस्याः धेनुलक्षणाया वाचः चत्वारश्चतुःसंख्यकाः स्तनाः सन्तीति शेषः, वाचः स्तनस्थानापन्नान् दर्शयति । स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारश्चेत्येते चत्वारः स्तना भवन्ति । यथा धेनुः चतुर्भिः स्तनैर्दुग्धं दत्त्वा लोकान् पालयति तथा त्रयीलक्षणा वागपि स्वाहाकारादिद्वारा देवादिकान् पालयतीत्यर्थः । तस्यै तस्या वाग्लक्षणाया धेन्वा द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं वषट्कारं च स्वाहाकारं वषट्कारं निमित्तीकृत्य देवानामुपजीवनं भवति । यद् मनुष्या देवेभ्यो ददति तत् स्वाहाकारवषट्कारोच्चारणपूर्वकमेव । इन्द्राय स्वाहा देवेभ्यो वषट् इत्यादिक्रमेण ततः स्तनद्वयमुपजीवन्ति देवा इति हन्तकारं मनुष्या इति । हन्तेत्युच्चार्य मनुष्यभ्योऽन्नादिकं ददातीत्यर्थः अतो हन्तकारात्मकस्तनमुपादाय मनुष्याणामुपजीवनमिति । स्वधाकारं पितर इति स्वधाकारेण पितृभ्यः स्वधां ददति पितॄनुद्दिश्य यत् श्राद्धादावन्नपानादिकं हव्यं ददाति तत् स्वधाकारोच्चारणद्वारेणैवेत्यतः पितरो वाग्लक्षणायाः स्वधाकारस्तनमुपादायैव जीवन्तीति भावः ।

( तस्याः प्राण इत्यादि ) तस्याः त्रयीलक्षणाया वाचः प्राणः प्रणानादिक्रियावान् ऋषभः श्रेष्ठः पितेत्यर्थः यतः प्राणबलेनैव वाक् प्रसूता भवति अयं भावः यावत् शरीरे प्राणस्तावदेव वागुच्चार्यमाणा भवति तदभावे तदभावस्य दर्शनात । अत एव बलवता समुच्चर्यमाणः शब्दो दीर्घो दीर्घतमो भवति बलरहितस्य शब्दो न्यूनो भवति बलस्य प्राणमूलकत्वं तु प्रसिद्धमेव अतएवोत्पादकत्वात् वाचः पिता प्राण इति । मनोवत्सः यथा वत्सेन स्तनचोषणात् दुग्धं स्तनैर्विनिर्गतं भवति तथैव मनसा वाक्

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
अष्टमं ब्राह्मणम् ।।८।।

# अथ पंचमाध्यायस्य नवमं ब्राह्मणम्

**अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदीदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स**

प्रास्रविता भवति । मनसा विचारितविषये एव वाचः प्रवृत्तिदर्शनात् मनसा आलोचितस्य वचसा प्रकाशनं ततः शरीरादिव्यापारेण तत्सम्पादनमिति क्रमस्ततो मनो वाचो वत्सस्थानीय भवति इति सुष्ठु कथितं मनोवत्स इति ।।१।।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
पंचमाध्यायस्याष्टमं ब्राह्मणम् ।।८।।

वैश्वानरोपासनां दर्शयितुमाह–

( अयमग्निरित्यादि ) योयमग्निः अन्तःपुरुषे पुरुषस्याभ्यन्तरे विद्यते सोयमग्निरेव वैश्वानरः परमात्मा जठरे वर्तमानः । यः खलु पुरुषस्याभ्यन्तरे तिष्ठति स कः इत्यपेक्षायामाह–

(येनेदमित्यादि) येन जठरे वर्तमानेनाग्निना यदिदमद्यते भुज्यमानं सर्वंभक्ष्यभोज्यादिकं पच्यते पाचितं भवति पुरुषेणोपभुज्यमानं सर्वमेववस्तु येन पाचितं भवति सोऽयमग्निर्जठरे विद्यमानो वैश्वानरः "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति भगवदुक्तेः ।

( तस्येत्यादि ) यं शब्दविशेषमेतत् इदानीं काले लोकः कर्णौ अंगुल्यादिना अपिधायाच्छाद्य शृणोति श्रोत्रेन्द्रियजन्यसाक्षात्कारीयविषयतामापादयति स एष घोषः शब्दविशेषः तस्य वैश्वानरस्य जाठरस्यै-

**यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति ॥ १ ॥**

**इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य नवमं ब्राह्मणम् ॥९॥**

# अथ पंचमाध्यायस्य दशमं ब्राह्मणम्

**यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्द्ध्व आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खं तेन स ऊर्द्ध्व आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र**

वेति स जाठराग्निर्यदा यस्मिन् काल उत्क्रमिष्यन् भवति यदा खलु शरीरात् विनिर्गतो भवति तदनन्तरम् एनं घोषमन्तःप्रतिष्ठितं शब्दं लोको न शृणोति । आन्तरीयं शब्दो जाठराऽग्नेर्विद्यते तत्र जाठरोऽग्निः कारणम् । उत्क्रमणानन्तरं कारणस्य तदग्नेरभावात् कार्यभूतशब्दस्याप्यभावो भवति । प्रत्यक्षन्तु वर्तमानसम्बन्धस्यैव भवति "सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिने" ति नियमात् तदिह कारणस्य जाठराग्नेरभावे तत्कार्याभावः व्यापकाभावस्य व्याप्याभावव्याप्तत्वात् । तादृशोपयुक्तमहामहिमजाठराग्नौ वैश्वानरे ब्रह्मदृष्टिः कर्त्तव्योपासकैरिति ॥१॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये

पञ्चमाध्यायस्य नवमं ब्राह्मणम् ॥९॥

इदमीयनवमब्राह्मणस्य प्रथममंत्रस्योपान्तिमभागे स यदोत्क्रमिष्यन् भवतीत्यत्रोत्क्रान्तिश्चर्चितेत्युत्क्रान्तिप्रसंगात् परिनिष्ठोपासनस्य ब्रह्मज्ञानिनो गतिं दर्शयितुमुपक्रमते—

( स यदा वै पुरुष इत्यादि ) स ब्रह्मज्ञानवान् परिनिष्ठितोपासनः पुरुषो यदा यस्मिन् काले अस्मात् शरीराधिष्ठानलोकात् प्रैति शरीर

**(वि)जिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्व आक्रमते स लोकमागच्छत्यशोकमहिम तस्मिन्वसति शाश्वतीः समाः ॥१॥**

परित्यजति । ततः शरीरत्यागादनन्तरं वायुमागच्छति । पूर्वमर्चिषमभिसम्भवति ततो दिनम् ततः पूर्वपक्षं तत उत्तरपक्षम् ततोमासम् ततोऽयनम् इत्यादि क्रमेण वायुलोकमासादयति, ततः तत्र वायुलोके तस्मै समागताय ब्रह्मज्ञानिने वायुर्विजिहीते विगमयति स्वकीयमवयवान् स्वस्मिन् छिद्रं करोति । किं प्रमाणकं छिद्रं भवति वायौ तत्राह–

(यथेत्यादि) यथा येन प्रकारेण रथचक्रस्य खं छिद्रम् यावत्प्रमाणकं रथचक्रे छिद्रं भवति तावत्प्रमाणं वायौ छिद्रं भवति । वायुना ब्रह्मलोकमार्गः पिहितो वर्तते तेन सर्वेषां तत्र न गतिर्भवति वायुना पिहितत्वात् परन्तु यदा ब्रह्मविद् गच्छति तदा तत्रोपासनाबलात् वायुः स्वावयवे छिद्रं सम्पाद्य तेन यथा तं ब्रह्मविदं गमयति प्रतिरोधको न भवतीति भावः । ततः रथचक्रछिद्रपरिमितछिद्रेण स ब्रह्मवित् ऊर्ध्वमाक्रमते तत ऊर्ध्वलोकं गच्छन् स आदित्यमादित्यलोक गच्छति प्राप्नोति सूर्यमण्डलम् । तत्रादित्यलोके स आदित्यः तस्मै ब्रह्मविदे समागताय विजिहीते छिद्रं करोति । कीदृशं छिद्रं करोति तत्राह–

(लम्बरस्येति) लम्बरस्य वाद्यविशेषस्य यावत्प्रमाणकं खं छिद्रं तत्प्रमाणकं छिद्रं करोति यद्यपि आदित्यो ब्रह्मलोकं प्रति प्रस्थितानां मार्गमवरुध्यस्थितः तेन सर्वेषां गमनं न भवति तथापि यः खलूपासक उपासनबलसम्पन्नः तस्मै प्राप्ताय लम्बराख्यवाद्यविशेषस्य छिद्रवत् छिद्रं सम्पादयति तेन छिद्रपथा स ब्रह्मवित् ऊर्ध्वमाक्रमते ऊर्ध्वं ततो याति । ततः सूर्यलोकादपि ऊर्ध्वं गच्छन् चन्द्रमसं चन्द्रलोकमागच्छति चन्द्रलोकं प्राप्नोतीत्यर्थः ।

इति बृहदारण्यकोपनिषदि पंचमाध्यायस्य
दशमं ब्राह्मणम् ॥१०॥

# अथ पंचमाध्यायस्य एकादशं ब्राह्मणम्

**एतद्वै परमं तपो यद्व्याहितस्तप्यते परमं हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्यं हरन्ति परमं हैव**

( तस्मै स इत्यादि ) तत्र स चन्द्रमा: तत्र चन्द्रलोके तस्मै प्राप्ताय ब्रह्मविदे विजिहीते यथा दुन्दुभे: खं छिद्रं दुन्दुभिछिद्रसदृशं छिद्रं करोति चन्द्रलोकाधिपतिस्तत: तेन तत्प्रमाणकेन मार्गेण स ब्रह्मवित् ऊर्ध्वं चन्द्रलोकादप्यूर्ध्वमाक्रमते तदाक्रम्य विद्युल्लोकं गच्छति ततो वरुणलोकं गच्छति तत इन्द्रलोकं प्राप्नोति तदनन्तरं धातृलोकं प्राप्नोति एवं क्रमशो लोकात् लोकान्तरमाक्रमन् ब्रह्मलोकमागच्छति । कथं भूतं ब्रह्मलोकं प्राप्नोति तत्राह–

( अशोकमित्यादि ) अशोकं शून्यम् अहिमम् हिमाद्याधिदैविक-दु:खरहितम् एतादृशं ब्रह्मलोकं प्राप्य तस्मिन् सर्वदु:खरहिते ब्रह्मलोके शाश्वती: समा: अनन्तसम्वत्सरपर्यन्त तत्रैव स ब्रह्मवित् वसतीति ॥१॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
पञ्चमाध्यायस्य दशमं ब्राह्मणम् ॥१०॥

( एतद्वै इत्यादि ) व्याधित: ज्वरादिरोगग्रहगृहीतो भूत्वा यत्तप्यते तापमनुभवति तदेतत् परममत्युत्कृष्ट तपस्तपश्चरणम् अर्थात् तप एव करोमीति ज्वरादिरोगग्रस्तश्चिन्तयेत् दु:खानुभवस्योभयत्रापि समानत्वात् यथोक्तक्रमेण चिन्तां कुर्वतो ज्ञानिनो रोगाननिन्दतो विषादमकुर्वत: तदेव तप: कर्म क्षपयति । उपभोगेन प्रारब्धकर्मणो विनाशस्य शास्त्रसिद्धत्वात् । ततश्च दुरदृष्टक्षपकत्वात् तदेव तपो भवतीति स एव चिन्ताशी

लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परमं हैव लोकं जयति य एवं वेद ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
एकादशं ब्राह्मणम् ॥११॥

# अथ पंचमाध्यायस्य द्वादशं ब्राह्मणम्

**अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो**

पुरुषः तेन विज्ञानेन तपसा विनाशितकर्मा परमुत्कृष्टं लोकं जयति प्राप्नोति । तादृशतपोबलात् विशिष्टं लोकमासादयतीति ।

( य एवं वेदै ते द्वै इत्यादि ) यं कमपि प्रेत मृतम् अरण्यं हरन्ति ग्रामादादाय ऋत्विजः शवहारका अरण्यं श्मशानभूमिं प्रतिहरन्ति नयन्ति तदपि परमं विलक्षणमेव तत्र यः ग्रामादरण्यगमनत्वस्य समानत्वात् तत्र यो जीवद्दशायामेव परमतपस्त्वबुद्धिं करोति स एवं चिन्तकः पुरुषस्तेन विज्ञानेन परममत्युत्कृष्टं लोकं स्थानं जयति प्राप्नोतीति

( य एवमित्यादि ) यं कमपि प्रेतं मृतमग्नौ ऋत्विजोऽभ्यदधति चितायामारोप्य वह्निं प्रज्वालयन्ति एतदपि परमं तपः अग्निप्रवेशसामान्यात् अनागतप्रेतस्येति वह्न्यावाधाने एतत्परमं तप एवं यो वेद विजानाति स परमं लोकं जयति । अन्योपि य एवं वेद सोपि परमं लोकं जयति । एतदुपासनशीलस्यापि परमलोकप्राप्तिर्भवतीति चिन्ताफलमितिभावः ॥१॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
पञ्चमाध्यायस्य एकादशं ब्राह्मणम् ॥११॥

( अन्नमित्यादि ) एके आचार्याः अन्नम् अद्यते पुरुषेणोपभुज्यते यत् तत् अन्नम् व्रीहियवौदनादिलक्षणं तदेव ब्रह्म । शरीरेन्द्रियादिकं बृंहयति परिणमयतीति । यथा आत्मना शरीरेन्द्रियाणां परिणमनं

**ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते हत्वेव देवते एकधा भूयं भूत्वा परमतां गच्छतस्तद्ध स्माह प्रातृदः पितरं किं स्विदेवैवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति स ह स्माह पाणिना मा प्रातृद कस्त्वेनयोरेकधा-**

तथैव व्रीहियवाद्यन्नभक्षणेन शरीरेन्द्रियादौ परिणामदर्शनादन्नमेव ब्रह्मेति केचन मन्यन्ते । तदेतत् श्रुतिरेव दूषयति ।

( तन्नेति ) न तथा न केवलमन्नमेव तथा यतो ऋते प्राणात् तदन्नं पूयति पूतिभावमागच्छति शरीरे प्राणसद्भावे भुक्तमन्नं बलपुष्टि-करं भवति प्राणाभावे तथा न भवति तस्मात्केवलमन्नं न ब्रह्मेति ।

( प्राणो ब्रह्मेत्यादि ) एके केचनाचार्याः प्राणो ब्रह्मेत्याहुः अन्नस्य ब्रह्मरूपतास्वीकारे प्राणाभावेनान्नस्य पूतिभावदर्शनात् नान्नं ब्रह्म किन्तु प्राण एव ब्रह्म एवं चानन्तरो दोषो नस्यात् प्राणसद्भावे क्षतमपि शरीरादिकं पुनः प्रादुर्भवति तस्मात् प्राण एव ब्रह्मेति वदन्ति । केवलप्राणस्य ब्रह्म वपक्षोपि न सम्यगिति ।

( दूषयति तन्नेत्यादि ) नायमपि पक्षः समीचीनः कुतस्तत्रोपपत्ति दर्शयति—

( शुष्यतीत्यादि ) ऋते अन्नात् अन्नमन्तरेण प्राणः शुष्यति शोष-मुपयाति यदैवान्न भुज्यमानं भवति तदा प्राणोपि शरीरे भवति कृते तूपवासे क्रमशः प्राणः शुष्को भवति तस्मात् न केवल प्राण एव ब्रह्मेति ।

केवलमन्नस्य केवलप्राणस्य चाब्रह्मतां दर्शयित्वा मिलितयोरन्नप्राणयोः परमतां दर्शयितुमाह—

( एते हेत्यादि ) यत एकैकस्य ब्रह्मत्वं न भवति तस्मात् कारणात् अन्नप्राणलक्षणे उभे एव देवते एकधाभूयं भूत्वा एकधाभाव प्राप्य मिलित्वेत्यर्थः परमतां परमत्वं गच्छतो भवतः । एकैकस्य कार्याक्षमत्वेपि संमिलिते कार्यं कुरुत इति ।

**भूयं भूत्वा परमतां गच्छतीति तस्मा उ हैतदुवाच वीत्यन्नं वै वी अन्ने हीमानि सर्व्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्व्वाणि भूतानि रमन्ते सर्व्वाणि ह वा अस्मिन्**

• ( तद्धस्मेत्यादि ) तदेवं पूर्वोक्तमध्यवस्य प्रातृदोनाम कश्चित् स्वकीयं पितरमाह समुवाच किंस्विदितिवितर्कं हे पितः अन्नप्राणौ सम्मिलितौ ब्रह्मेति एवं विदुषे ज्ञानवते मह्यं किं साधु शोभनं शास्त्रविहितं कर्म किं कुर्याम् एवमसाधुशास्त्रप्रतिषिद्धं कर्म किं कुर्याम् । अर्थात् अन्नप्राणयोर्ब्रह्मत्वं ज्ञातवतो मे अत एव कृतकृत्यस्य पुण्यपापकर्मभ्यां किं भविष्यति न किमपि भविष्यतीति ।

अस्मै इत्यादि पदेन स्वात्मानमेव दर्शयति शरीरेन्द्रियादिभ्यो भेदज्ञापनायेति । एवं प्रकारेण पुत्रस्य प्रातृदस्यवचनं श्रुत्वा स ह तस्य पिता पाणिना हस्तेन पुत्रं निवारयन् प्राह– हे पुत्र प्रातृद मैवं वद कः पुरुषः एतयोरन्नप्राणयोरेकधा भूयमेकधाभावं गत्वा परमतां परमत्वं ब्रह्मत्वमित्यर्थः गच्छति न कश्चिदपि अन्नप्राणयोरेकधा भावं विद्वान् अनेन भवदुक्तेन दर्शनेन परमतां गच्छति न कोपि गच्छतीति । तस्मात्कदाचिदपि नैव वक्तव्यं यत् एतादृशज्ञानवान् कृतकृत्यो भवतीति । एवं प्रकारेण पितुर्निषेधकवाक्यं श्रुत्वा प्रातृदः स्वकीयं पितरं पृच्छति यदहमुपपत्तिपूर्वकं कथयामि तेन चेत् परमतां न प्राप्नोति तदा भगवानेव कथयतु यत् परमतां केन प्रकारेण गच्छतीति पुत्रवचनं श्रुत्वा पिता प्रोवाच तदेव दर्शयति ।

(तस्माउ इत्यादि) तस्मै पुत्राय प्रातृदाय पिता एतद् वक्ष्यमाणवचनमुवाच प्रोक्तवानिति किमुक्तवान् तत्राह–

( वीत्यन्नमित्यादि ) अन्नं वै वीति यस्मात्कारणात् सर्वाणि भूतानि प्राणिजातानि इमानि प्रत्यक्षपरिदृष्टानि अन्ने एव विष्टानि आश्रितानि अन्नाश्रयेणैव भवन्ति । अन्नजनितवीर्यादिना जातानि भवन्ति स्थितिकाले तेनैव पुष्टानि भवन्ति पुनश्च विनाशकाले अन्ने पृथिव्यादिष्वेव समनुगतानि

भूतानि विशन्ति सर्व्वाणि भूतानि रमन्ते य एवं वेद ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
द्वादशं ब्राह्मणम् ॥१२॥

# अथ पंचमाध्यायस्य त्रयोदशं ब्राह्मणम्

उक्थं प्राणो वा उक्थं प्राणो हीदं सर्व्वमुत्थापयत्युद्धा-
स्मादुक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यं सलोकतां जयति य

भवन्ति तस्मात् कारणात् अन्न वीत्युच्यते इति ।

(रमितीति) रमिति प्राण उपास्यते इति । एतदेवोपपादयति ।

(प्राणो वै रमित्यादि) प्राण एव रम् कुत एवम् यतः सर्वाणीमानि भूतानि प्राणे एव रमन्ते तस्मात् प्राणो रमिति । वि, रम, इत्याकारकागुण-विशिष्टान्नप्राणयोरुपासनाय फलं दर्शयितुमाह—

( सर्वाणि ह वेत्यादि ) य. खलूपासकः एवं विरमगुणविशिष्टमन्नं प्राणं च वेद विजानाति उपास्ते इत्यर्थः अस्मिन् उपासके सर्वाणि भूतानि विशन्ति अन्नगुणज्ञानात् तथा सर्वाणि भूतानि रमन्ते प्राणगुण ज्ञानादिति ॥१॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
पञ्चमाध्यायस्य द्वादशं ब्राह्मणम् ॥१२॥

प्राणस्य ऋग्यजुःसामत्वेनोपासनं दर्शयितुमुपक्रमते—

( उक्थं प्राणोवेत्यादि ) तत्रोक्थ शस्त्रं तद् यथा महाक्रतौ प्रधानं तथैवास्मिन्शरीरे इन्द्रियाद्यपेक्षया प्राणः प्रधानं प्राणाधीनत्वात् सर्वव्यव-हाराणाम् अत उक्थ इत्येवं रूपेण प्राणोपासनं विधेयम् तदेव दर्शयति प्राण एवोक्थम् कथं प्राण उक्थं तत्राह—

( प्राणो हीदमित्यादि ) हि यस्मात् कारणात् प्राण एव इदं सर्वं शरीरादिकमुत्थापयति तस्मात्कारणात् प्राण एवोक्थम् । शरीरादीनामुत्था-

एवं वेद ॥१॥

**यजुः प्राणो वै यजुः प्राणे हीमानि सर्व्वाणि भूतानि युज्यन्ते युज्यते हास्मै सर्व्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यं सलोकतां जयति य एवं वेद ॥२॥**

पनादेव प्राण उक्थमिति । नहि प्राणविहीनस्य क्वचिदुत्थानं दृष्टमुपपद्यतेवेति । एतादृशप्राणोपासनस्य गौणफलं दर्शयति ।

( उद्धास्मादित्यादि ) उत् अस्मात् एवं ज्ञानवतः उक् वित् प्राणवित् वीरः शारीरादिबलवीर्ययुक्तः पुत्र उतिष्ठति एतादृश पुत्र उत्पद्यते इत्यर्थः । एतत्फलमैहिकम् तद्दर्शयित्वा पारलौकिक फलं दर्शयति ।

( उक्थस्येत्यादि ) य उपासकः एवं यथोक्तगुणसम्पन्नं प्राणं वेद विजानाति यथोक्तगुणसम्पन्नं प्राणस्योपासनं करोति स उपासकः परलोके उक्थस्य सायुज्यं सलोकतां जयति प्राप्नोति उक्थस्य लोक तदात्मकतां च प्राप्नोतीति भावः ॥१॥

( यजुःप्राणो वै इत्यादि ) प्राणो वै यजुर्यजुर्वेदः यजुरिति कृत्वा प्राणमुपासीतेत्यर्थः । प्राणस्य कथं यजूरूपत्वं तत्राह–

( प्राणो हीत्यादि ) हि यस्मात् कारणात् प्राणे विद्यमाने एव सर्वाणि भूतानि प्राणिजातानि युज्यन्ते युक्तानि भवन्ति । नहि प्राणस्याभावे कस्यचित् केनचित् सहयोगसामर्थ्यं दृश्यते उपपद्यते वा तथा युनक्ति इति प्राणोयजुरिति । एतत्फलं दर्शयति ।

( युज्यन्ते हास्मै इत्यादि ) अस्मै एवंविदे उपासकाय सर्वाण्यपि स्वव्यतिरिक्तानि भूतानि प्राणिजातानि श्रैष्ठ्याय श्रेष्ठभावाय अस्माकं मध्येऽयं श्रेष्ठो विद्याबलादिना श्रेष्ठो भवतु इत्यभिप्रायेण संयुक्तानि भवन्तीति । मुख्यं फलं दर्शयति ।

साम प्राणो वै साम प्राणे हीमानि सर्व्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्व्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यं सलोकतां जयति य एवं वेद ॥३॥

क्षत्रं प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः

( यजुष इत्यादि ) य एवं यथोक्तगुणसम्पन्नं प्राणं वेद विजानाति तदुपासनं करोति स उपासकः यजुषः प्राणस्य सायुज्य सलोकतां जयति प्राप्नोतीत्यर्थः ॥२॥

(साम प्राणो वै इत्यादि ) सामेति कृत्वा प्राणमुपासीत कथं प्राणस्य सामरूपत्वं तत्राह–

(प्राणे हीत्यादि) यस्मात्कारणात् प्राणे विद्यमाने एवेमानि सर्वाणि भूतानि प्राणिजातानि सम्यञ्चि संगच्छन्ते इति संगमनात् साम्यताकारणात् प्राणः सामेति । फलादिकं पूर्ववदेवानुसन्धेयं प्रकरणं च पूर्ववदेव व्याख्येयमिति ॥३॥

( क्षत्रं प्राणो वै इत्यादि ) इमं प्राणं क्षत्रमिति कृत्वा समुपासीत यथा बलवीर्यादिसम्पन्नः क्षत्रजातिरितरान् ब्राह्मणादिन् पालयति तथा प्राणोपि शरीरादिकं क्षतादिना परिपालयति तस्मात्क्षत्रमिति कृत्वा प्राणमुपासीतेति भावः । कथं प्राणः क्षत्रम् । तत्रोपपत्तिं दर्शयति ।

( प्राणो हि वै क्षत्रमित्यादि ) हि यस्मात्कारणात् प्रसिद्धमेतत् यत्प्राणः क्षत्रम् । कथ प्राणस्य क्षत्रत्वं प्रसिद्धम् तत्राह—

(त्रायते हैनमित्यादि) अयं प्राणः क्षणितोः शस्त्रादिना क्षतमेनं शरीरं त्रायते पालयति पुनर्मांसस्य वर्द्धनात् पूरयति तस्मात्क्षतत्राण-करणात् प्राणस्य क्षत्रत्वं प्रसिद्धम् । अयमाशयो यथा क्षत्रजातिः स्वबलेन प्रजाः पालयन् क्षत्रिय इति व्यपदिश्यते तथैवायं प्राणः शरीरावयवं शस्त्रादिना विहतमपि मांसशोणितादिप्रवर्द्धन न तं त स्थानं कतिपयै-

**प्रक्षत्रमत्रमाप्नोति क्षत्रस्य सायुज्यं सलोकतां जयति य एवं वेद ॥४॥**

**इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य**

**त्रयोदशं ब्राह्मणम् ॥१३॥**

# अथ पञ्चमाध्यायस्य चतुर्दशं ब्राह्मणम्

**भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै**

राष्ट्रं रापूरयति ततश्च शरीरस्य पालनकरणात् प्राणोपि क्षत्रिय इति व्यपदिष्टो भवति उभयत्र पालयितृत्वधर्मस्य समानत्वादिति । सम्प्रति प्रकृतोपासनाफलं दर्शयति ।

( प्रक्षत्रमित्यादि ) अत्रं नान्येन केनचित् त्रायते इत्यत्रं प्रक्षत्रमत्रं प्राप्नोति समुपासकः तथा य उपासक एवं क्षत्रत्वगुणविशिष्टमेनं प्राणं वेद विजानाति तदुपासनं करोति स क्षत्रस्य सायुज्यं सलोकतां च जयति प्राप्नोतीति भावः ॥४॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये

पञ्चमाध्यायस्य त्रयोदशं ब्राह्मणम् ॥१३॥

एवं पूर्वोक्तप्रकारेण मनोहृदयाद्यनेकगुणविशिष्टतया भगवतः साकेताधिपतेरुपासनं दर्शयित्वा तस्यैव गायत्र्युपाधिविशिष्टस्योपासनं प्रदर्शयितुमुपक्रमते ।

(भूमिरन्तरिक्षमित्यादि) गायत्री छन्दो हि सर्वछन्दसां प्रधानम् तत्-गानकर्तॄणां त्राणं करोति तस्मात्गायत्रीछन्द इति प्रतिपादयिष्यति यान्येतदतिरिक्तछन्दांसि तेषां प्रयोक्तृ प्राणपालनसामर्थ्यं न विद्यते प्राणलक्षणा गायत्री प्राणस्य पालकत्वम् तत्पूर्वब्राह्मणे प्रतिपादितम् । अतो गायत्रीछन्दसः सर्वछन्दसां प्रधानत्वात्तदुपासनमेवात्र प्रतिपाद्यते । किं च गायत्रीछन्दसो ब्राह्मणजन्मकारणत्वमपि "गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं

**पदमेतदु हैवास्या एतत्स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥१॥**

**ऋचो यजूंषि सामानीत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥२॥**

**प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं**

जगत्या वैश्यमिति" श्रुत्यन्तरेण ब्राह्मणस्योत्पादनं गायत्रीनिमित्तकम् तस्मात् सर्वछन्दसां प्रधानभूता गायत्री। तस्मात् गायत्र्युपासनं दर्शयति। भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि। सस्वरमकारादारभ्य दियोरित्यन्तम् वर्णाष्टकं भवति। गायत्र्यै गायत्र्या एकं पदमपि अष्टाक्षरम् गायत्र्याः प्रथमपादे अष्टाक्षराणामेव विद्यमानत्वात् इत्यष्टाक्षरत्वसामान्यात् एतत् लोकत्रयं भूम्यन्तरिक्षाद्यात्मकम् अस्या गायत्र्या एतत् एकं पादम्। भूम्यन्तरिक्षादिषु लोकेषु गायत्र्याः प्रथमपादबुद्धिः कर्तव्येति। लोकत्रयं गायत्र्याः प्रथमं पादमिति ज्ञानवत् उपासकस्य कीदृशं फलं भवतीति दर्शयति।

(स यावदेषु त्रिषु इत्यादि) य उपासकः अस्या गायत्र्या एवं यथोक्तप्रकारेण एतत् त्रैलोक्यात्मकं पदं प्रथमं पादं वेद विजानाति। भूमिरन्तरिक्षं द्यौरिति त्रैलोक्यात्मकं गायत्र्याः प्रथमं पदमित्येवमुपास्ते स उपासक एष भूम्यादिषु त्रिलोकेषु यावत् वस्तुजातं जेतव्यं प्राप्तव्य विद्यते तावत् ह जयति प्राप्नोति लोकत्रयवर्तिपदार्थजातमवश्यमेव लभते इति भावः ॥१॥

(ऋचो यजूंषीत्यादि) ऋचो यजूंषि सामानीत्यत्र वाद्ये अष्टावक्षराणि सन्ति। एतदष्टाक्षरम् गायत्र्या एकं पादम् एतदेवाष्टाक्षरमस्या गायत्र्या

**गायत्र्यै पदमेतदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेदाथास्या एतदेव तुरीयं दर्शतं पदं परो रजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष**

एकं पादम् वेदत्रयात्मकमस्या एकं पादमिति । इयं त्रयी ऋग् यजुः सामात्मिका विद्या यावती यावत् प्रमाणिका फलप्रकाशिका तावद्धतावत् प्रमाणकं सर्वं फलं स उपासको जयति प्राप्नोति । य उपासको वेदत्रयात्मकं गायत्र्या एकं पदमिति वेद विजानाति स त्रयीप्रतिपाद्यं सर्वं फलं प्राप्नोतीत्यर्थः ।।२।।

(प्राणोऽपान इत्यादि) प्राणोऽपानो व्यान इत्यष्टावक्षराणि तत्र प्राण-इत्यत्राक्षरद्वयम् अपान इत्यत्र चाक्षरत्रयम् व्यान इत्यत्र वियान इति कृत्वा-ऽक्षरत्रयं मिलित्वा अष्टाक्षराणि तदेतदष्टाक्षरम् गायत्र्यै गायत्र्या एकं पदम् त्रयीवत् । एतदेवास्या एकं पदमिति । य उपासक एवं प्राणापानादिकं गायत्र्या एकं पदमिति विजानाति स यावदिदं प्राणिजातम् प्राणापानादि-क्रियाकर्तृ तत्सर्वं जयति इति ।

(अथास्या इत्यादि) अथ गायत्र्याः पादत्रयकथनानन्तरम् अस्या गायत्र्या एतदेव वक्ष्यमाणमेव दर्शतं तुरीयं चतुर्थं पदम् ।

( परोरजा एष तपति ) तत्र तुरीयं पदं दर्शतं च पदं स्वयमेव श्रुतिर्व्याचष्टे ।

(यद्वै इत्यादि) यद्वै लोके चतुर्थं प्रसिद्धम् तदिदं तुरीयं तुरीयशब्देन कथ्यते । दर्शनमित्यस्यार्थं दर्शयति ।

( ददृश इवेत्यादि ) एष आदित्यमण्डलान्तर्गतपुरुषः ददृशे इव स्पष्टरूपेण सर्वेषां दर्शतविषयतां न गच्छति किन्तु प्रणिहितमनसा महता कष्टेन कश्चिदेव पश्यति ततो दृश्यते इवेति कथितम् भासते प्रकाशितो भवति

**परो रजा इति सर्वमुह्येवैष रज उपर्युपरि तपत्येवं हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ।।३।।**

**सैषा गायत्र्येतस्मिंस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एव ब्रूयादहम-**

अतो दर्शतं पदं तदेवेति । परोरजा इत्यस्यार्थं दर्शयति—

(परो रजा इतीत्यादि) सर्वम् रजः सर्वमपि रजोगुणजात लोकम् रजः पदं सत्वतमसोरप्युपलक्षकम् एकगुणेन सृष्टेरसम्भवात् किन्तु मिलित्वा सर्जनम् 'अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिन" इति श्रवणात् । किन्तु सृष्टौ रजस आधिक्यात् राजसं लोकमिति कथितं रजसः प्राधान्यात् तादृशं लोकमुपर्युपरि तपति प्रकाशयति अत्यन्तमूर्ध्वं स्थित्वा लोकान् तपतीत्यर्थः एतादृश आदित्यमण्डलान्तर्वर्त्ति सर्वावभासको यशसा श्रिया दीप्तो दर्शताख्यतुरीयपदस्थानः ।

(एवं हैवेत्यादि) यः खलूपासकोऽस्या गायत्र्या एतद्दर्शतं तुरीयं पदं मण्डलान्तर्गतं पुरुषमिति वेद विजानाति स एवमेव यथा सूर्यमण्डलमध्यस्थितः सविता सर्वाधिपत्यलक्षणया श्रिया यशसा ख्यातिलक्षणया च तपति शोभते प्रकाशको भवति तथैवोपासकोपि यशसा श्रिया च तपतीति ।।३।।

(सैषेत्यादि) एषा सा गायत्री एतस्मिन्तुरीये चतुर्थे दर्शते दर्शतनामकपदे परोरजसि सर्वलोकादुपर्युपरि वर्तमाने आदित्यमण्डलपुरुषे प्रतिष्ठिता प्रकर्षेण स्थिता । तद्वै तुरीयं चतुर्थपदं सत्ये प्रतिष्ठितम् प्रकर्षेण स्थितं किं तत्सत्यं यस्मिन् तुरीयं पदं तत्राह—

(चक्षुर्वै सत्यमित्यादि) चक्षुर्वै सत्यमेव लोके प्रसिद्धम् यत्तु चक्षुर्वै सत्यमिति । कथं चक्षुः सत्यमिति चक्षुषः सत्यत्वे उपपत्तिं दर्शयति ।

**वर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलं सत्यादोजीय इत्येवमेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गयांस्तत्रे प्राणा वै गयास्तत्प्रा-**

( तस्याद्यदित्यादि ) यस्मात् कारणात् चक्षुः सत्यं चक्षुषः सर्वानिशयिप्रामाण्यमितरेन्द्रियापेक्षयापि । अत इदानीमद्यत्वेपि द्वौ विवदमानौ पुरुषौ एयाताम् आगच्छेयाताम् अहमदर्शं दृष्टवानस्मि अपरो वदति अह श्रुतवानस्मि एव प्रकारेण तत्र यः अहं दृष्टवानस्मीति वदति तस्मै एव श्रद्दध्याय, तद्वचसि सर्वे श्रद्धां कुर्वन्ति तस्यैव प्रामाण्यं भवति न तु श्रुतवानस्मीति वदतः प्रामाण्यमतः श्रोत्रादिभ्यश्चक्षुषः प्रामाण्यं शक्यतः चक्षुषः सत्यत्वमिति । प्रमाणान्तरस्य मिथ्यात्वं संभवत्यपि न तु चक्षुर्दर्शनस्य मृषात्वमिति । तद्वैतत्सत्यं चक्षुर्बले प्रतिष्ठितं तदाश्रितमित्यर्थः । किं तद्बलं यत्र सत्यं चक्षुः प्रतिष्ठितमित्यत आह—

(प्राणो वै इत्यादि) योयमध्यात्मं प्राणः स एव बलमिति एतादृशे बलपदवाच्ये प्राणे सत्यं चक्षुः प्रतिष्ठितम् तस्मात्कारणात् लोका एवमाहुर्यत् बलं प्राणः सत्यात् सत्यपदवाच्यचक्षुष ओजीय ओजस्तरम् अतिशयेन बलवदिति । लोकेपि दृश्यते— यो हि यस्याश्रये तिष्ठति स तस्मात् बलवान् आधेयापेक्षया आधारस्याधिकतरं गौरवम् प्रकृते प्राणे चक्षुः प्रतिष्ठितमिति । आश्रित चक्षुरपेक्षया आश्रयस्य प्राणस्य बलवत्त्वमिति । एवं प्रकारेण उ ह एषा गायत्री परम्परया अध्यात्मं प्राणो गायत्री प्रतिष्ठिता । गायत्री आदित्यमण्डलस्थपुरुषे स च सत्ये चक्षुषि प्रतिष्ठितः सत्यं प्राणे इति परम्परया गायत्री प्राणे प्रतिष्ठितेति । सम्प्रति गायत्रीपदस्य निर्वचनमाह श्रुतिः ।

( सा हैषेत्यादि ) सा एषा गायत्री पूर्ववर्णिता गयान् वागादि-

**णांस्तत्रे तद्गयांस्तत्रे तस्माद्गायत्री नाम स यामेवामूं सावित्री-मन्वाहैषैव स यस्मा अन्वाह तस्य प्राणांस्त्रायते ।।४।।**

**तां हैतामेके सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम**

प्राणवर्गान् तत्रेत्रातवती त्राणं पालनमकरोत् त्रैङ् पालने धातुस्तस्य लिटि रूपं तत्रे पालयतिस्मेत्यर्थः । गयशब्दस्यार्थं स्वयमेव श्रुति-राविष्करोति ।

(प्राणा वै इत्यादि) प्राणा वै वागादिका गया गयपदवाच्यास्तान् गयान् सा तत्रे पालितवती ।

(तद्यदित्यादि) यत् यस्मात् कारणात् गयान् वागादीन् प्राणान् तत्रे पालितवती तस्मादेव कारणात् एतस्या नाम गायत्री स आचार्यो या-मेवामूं सवित्रीं सवितृदेवताकाम् उपनीतमाणवकमन्वाहोक्तवान् सा एषैव गायत्री यां यच्छः अर्धर्चसः सम्पूर्णायिनेन प्रकारेण कथितवान् सावित्रीं सा एषैव गायत्री त्राणकरणात् । तथा स आचार्यो यस्मै शिष्यायान्वाहोक्तवान् तस्य शिष्यस्य प्राणान् वागादीन् नरकपतनादिभ्यस्त्रायते रक्षति इति ।।४।।

(तां हैतामित्यादि) एके केचनाचार्याः तामेतां सावित्रीं सवितृ-देवताकाम् अनुष्टुभम् अनुष्टुप्प्रभवाम् अनुष्टुप्छन्दस्काम् उपनीतमाणव-कायाहुः कथितवन्तः । तेषामयमभिप्रायो यत् वाक् अनुष्टुप् एतत् वाचं वचनमेवानुब्रूमः इति । एतन्मतं दूषयति न तथा कुर्यादित्यादि यथा एके शाखिनः कथयन्ति न तथा तेन रूपेण कुर्यात् अनुष्टुप् छन्दस्कां सावित्रीं माणवकायनोपदिशेत किन्तु गायत्रीमष्टाक्षरैः त्रिभिः पादैर्युक्तां गायत्री-छन्दस्कामेव सावित्रीमनुब्रूयात् उपदिशेत् । यत प्राणो गायत्रीति पूर्वं कथितम् प्राणे कथिते वचनादिकं सर्वमपि उपनीताय कथितमेव तदा किमन्यत् परिशिष्यते इति । सम्प्रति गायत्रीविज्ञानवतः फलं दर्शयति ।

इति न ;तथा कुर्य्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदिह वा अप्येवं विद्बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकञ्च न पदं प्रति ॥५॥

**स य इमांस्त्रींल्लोकान् पूर्णान् प्रतिगृह्णीयात्सोऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि**

(यदि ह वेत्यादि) एवं वित् गायत्रीविज्ञानवान् बहु इव प्रतिगृह्णाति कुटुम्बादि पोषणाय स्वशरीरयात्रानिर्वाहाय च अनेकप्रकारकमपि प्रतिग्रहम् अन्नसुवर्णगवादिलक्षणं पात्रेभ्योऽपात्रेभ्यो वा आददाति तत्प्रतिग्रहजातम् गायत्र्या एकं च न एकमपि पदं प्रतिपर्याप्तं न भवति एकैक पदेनापि सह न स्पर्धते । गायत्रीपादविदः प्रतिग्रहस्वीकर्तुः प्रतिग्रहात् जायमाना यावन्तो दोषास्ते सर्वेपि विनष्टा भवन्तीति भावः ॥५॥

(स य इमानित्यादि) स यो गायत्रीविज्ञानवान् इमान् त्रीन् लोकान् भूरादिकान् लोकान् पूर्णान् व्रीहियवादिधान्यसुवर्णगवादिपूर्णान् यतस्ततो वस्तुविशेषात् प्रतिगृह्णीयात् प्रतिग्रहरूपेण स्वात्मसात्कुर्यात् स प्रतिग्रहीता अस्या गायत्र्या एतत्प्रथमं पदमाप्नुयात् गायत्र्याः प्रथमपादज्ञानफलं प्राप्नुयात् प्रथमपादज्ञानफलमेव तत् नत्वधिकम् अधिकप्रतिग्रहे हि दोषः एतच्च प्रथमपादज्ञानस्य फलं लोकत्रयभोक्तृत्वमिति भावः । अथ यावती-यावत्प्रमाणेयं त्रयीविद्या ऋक्यजुःसामलक्षणा । यो गायत्रीवित् तावत्प्रमाण-क प्रतिग्रहं प्रतिगृह्णीयात् स्वीकुर्यात् सोऽस्या गायत्र्या एतद द्वितीयं पदमाप्नुयात् सकलवेदेभ्यः प्रकाशितानि यानि यानि फलानि तेषां सर्वेषां फलानामनुभवो गायत्रीविदो द्वितीयपादज्ञानस्य फलमिति भावः ॥५॥

(अथ यावदिदमित्यादि) अथ यावदिदं यावत्प्रमाणकमिदं प्राणि-

**यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति नैव केन चन नाप्यं कुत उ एतावत्प्रतिगृह्णीयात् ॥६॥**

**तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि**

जातम् तावत्प्रमाणकमपि यदि कुतश्चित् प्रतिगृह्णीयात प्रतिग्रहरूपेणा-त्मसात्कुर्यात् स एतादृशः प्रतिग्रहोऽस्या गायत्र्या एतत्तृतीयं पदं स प्राप्नुयात् तृतीयपादज्ञानस्य सर्वप्राणिशेषित्वमेव फलम् सर्वे प्राणिवर्गा एतस्यावयव-भूता भवन्तीति भावः ।

(अथास्या एतदेवेत्यादि) अथास्या गायत्र्यास्तुरीयं चतुर्थं दर्शतं पदं परोरजा सर्वलोकानामुपर्युपरि वर्तमानो मण्डलमध्ये निविशमानः य एष तपति । ईदृशं यत्फलं तत्केनचनापि केनापि पुरुषेणाप्यं प्राप्तुं योग्यं नास्ति । कथमेतादृश फलमन्येन प्राप्तुमयोग्यं तत्राह––

(कुत उ इत्यादि) कुत उ एतावत् प्रतिगृह्णीयात् । एतत्सदृशं कुतो भवेत् नैव कथमपीति अतोऽनन्तमेव तस्य फलं नान्यत्तस्य फलमिति भावः ॥६॥

गायत्र्या उपस्थानं दर्शयितुमाह––

(तस्या इत्यादि) तस्या गायत्र्या उपस्थानमुपेत्य स्थानं नमस्कारादिकमनेनेत्युपस्थानं तदुच्यते इति शेषः । हे गायत्रि ! प्राणादीनां रक्षणकर्त्रीः एकपदी भूरादिलोकत्रयपादेनैकपादवती भवसि । तथा द्विपदी भवसि ऋगादित्रयीलक्षणेन पदी द्विपदी पादद्वयवती त्वं भवसि । त्रिपदी सकल-प्राणादिना पादेन त्रिपादवती त्वमेव भवसि । चतुष्पदी परोरजसा चतुर्थ-पदेन चतुष्पादवती भवसि । अपद्यसि अविद्यमानं पदं यस्याः सा अपदी त्वमसि कुत एवं तत्राह––

**न हि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा न हैवास्मै स काम ऋध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥७॥**

**एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो**

( न हि पद्यसे ) पद्यसे गम्यसे ज्ञायसे नैवेत्यर्थः । अनन्तमहिमतया परिच्छिन्नतया त्वं ज्ञातु योग्या न भवसीति भावः । तुरीयपादनमस्कारायाह—

(नमस्ते इत्यादि) हे गायत्रि ते तव तुरीयाय चतुर्थाय पदाय दर्शताय परोरजसे नमो नमस्कारो भवतु तव चतुर्थं पादं नमस्करोमीत्यर्थः यं द्विष्यात् द्वेषं कुर्यात् असौ शत्रुरदो अस्मै शत्रवे यं शत्रुमुद्दिश्य गायत्र्या उपस्थानं करोति तस्मै तस्य शत्रोः कामोऽभिलषितं मा समृद्धि नैव कथमपि सफलं भवति । तथा स शत्रुरिदं वाञ्छितं मा प्रापत् कथमपि वाञ्छितं नैव प्राप्नोति । असौ कामोऽस्मै अमुकशत्रवे मा समृद्धी मा भवतु । यदर्थं यत्कामयते गायत्रीवित् तस्य तद्भवत्युपस्थानबलात् । अहमदः कल्याणं प्रापं प्राप्तवानस्मि । एवं य उपतिष्ठते तस्य तत्फलं प्राप्तं भवतीति भावः । एतेषां त्रयाणामपि मन्त्राणां विकल्पेन विनियोगो ज्ञातव्यो न तु सह विनियोग इति ॥७॥

गायत्री मुखस्तुतये इदमाह––

( एतद्ध वै इत्यादि ) एतत् वक्ष्यमाणं किल ह श्रूयते । जनको ह वैदेह एतद्गायत्रीविज्ञानं प्रस्तुत्य नामतो बुडिलम् आश्वतराश्विम् आश्वतरस्यापत्यमश्वतराश्वि मुनिविशेषं प्रत्युवाच प्रोक्तवान् किमुक्तवान् जनको बुडिलं तत्राह—

( यन्नु इत्यादि ) भोः ब्राह्मण ! अहं गायत्रीविदस्मीति यत्त्वम् अब्रुथाः वदसि किन्नु इदं त्वदीयं वचनं गायत्रीविदोनानुरूपमिति । कुत एवं

तद्गायत्रीविदब्रूथा अथ कथं हस्तीभूतो वहसीति मुखं ह्यस्याः सम्राण्न विदाञ्चकारेति होवाच तस्या अग्निरेव मुखं यदि ह वा अपि बह्विवाग्नावभ्यादधति सर्व्वमेव तत् सन्दहत्येवं हैवंविद्यद्यपि बह्विव पापं कुरुते सर्व्वमेव तत्संप्साय शुद्धः पूतो जरोऽमृतः सम्भवति ॥८॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
चतुर्द्दशं ब्राह्मणम् ॥१४॥

तत्राह अथ त्वं हस्तिभूतो हस्तिवत् प्रतिग्रहजनितं महत्पापं वहसि। अथापि वदसि यदहं गायत्रीविदस्मीति गायत्री विदां नैतदनुरूपमिति। राज्ञैवमुक्तो ब्राह्मणः प्राह——

(मुखमित्यादि) हे सम्राट् ! राजन् ! गायत्रीं तु अहं जानामि किन्तु अस्या गायत्र्या मुखं न विदांचकारेति होवाच । गायत्रीमुखं न जानामीत्येवं स राजानं कथितवानिति । ततो वैदेहः प्राह- हे ब्राह्मण ! तस्याः प्रक्रान्ताया गायत्र्या मुखं प्रधानमङ्गमग्निर्वैश्वानर एव अग्नेः परमेश्वरमुखजन्यत्वेन तेनैव मुखवत्त्वं गायत्र्या अपि तथा "अग्निमुखा देवाः" इति कथनात् अग्निरेव गायत्र्या मुखम् । तद्यपि बहु अधिकमपीन्धनादिकम् अग्नौ वैश्वानरे प्रक्षिपति ददाति तत्सर्वं क्षणादेव संदहति भस्मसात्भवति यथा तथा एवंवित् गायत्र्यामुखं वह्निरिति ज्ञानवान् यद्यपि ब अनेकप्रकारकमत्यधिकमपि पापं प्रयोजकं निषिद्धकर्मानुष्ठानमयाज्ययाजनमयात्रादिप्रतिग्रहमपि कुरुते सम्पादयति किन्तु तत्सर्वमपि संज्ञाय सर्वं विनाशयित्वा शुद्धः प्रतिबन्धकमलरहितः पूतः पवित्रः सम्पन्न ब्रह्मविद् यः सन् अमृतो मरणरहितः अजरो जरया विवर्जितो जरामरणशून्य इत्यर्थः संभवति ब्रह्मप्राप्तियोग्यो भवतीति ॥८॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये पञ्चमाध्यायस्य
चतुर्दश ब्राह्मणम् ॥१४॥

# अथ पंचमाध्यायस्य पञ्चदशं ब्राह्मणम्

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं तत्त्वं पूषन्नपावृण सत्यधर्माय दृष्टये पूषन्नेकर्षे यमसूर्य्यप्राजापत्य व्यूह रश्मीन् समूह**

अर्चिराद्यातिवाहिकान्तर्गतसूर्यप्रार्थनामन्त्रं दर्शयितुमह--

( हिरण्मयेनेत्यादि ) ज्ञानकर्मसमुच्चयकारी अधिकारी मरणसमयादव्यवहितपूर्वकाले सूर्यं प्रार्थयति स हि आदित्यो गायत्र्याश्चतुर्थोऽस्तस्तदुपस्थानं प्रकृतमतः सूर्यमेव प्रार्थयने । सत्यस्य परब्रह्मणो मुख द्वारं ब्रह्मणः प्राप्तिमार्गम् हिरण्मयेनातिशयिततेजोविशिष्टेन पात्रेण तेजोमण्डलाख्येन अपिहितमाच्छादितमावृतमित्यर्थः । तत्मार्गम् हे पूषन् हे सूर्य सर्वस्य जगतः पोषणकरणात् पूषा सूर्यः अपावृणु आवरणं प्रतिबन्धकं तद्रहित कुरु येन सुखेन मम गमनं तत्र भवेदिति । कुतोऽपावरणं कर्तव्यं तत्राह--

(सत्येत्यादि) सत्यधर्माय दृष्टये तत्र सत्यं सर्वथा सत्यं ब्रह्म धर्माश्रयः साधनं यस्य स सत्यधर्मः तस्मै सत्यधर्माय ब्रह्मैकनिष्ठाय मह्यम् ब्रह्मदर्शनेच्छावते मह्यमित्यर्थः दृष्टये परमात्मदर्शनायेत्यर्थः । अपावृतमार्गोहं ब्रह्म द्रष्टुं शक्ष्यामीति नान्यथा मे ब्रह्मदर्शनं सम्भवतीति । हे पूषन् जायमानस्य सर्वस्य पोषणात् पूषा । सूर्यतेजसैव सर्वे पुष्टाभवन्ति तत्संबोधने हे पूषन् । एकर्षे एक एव ऋषति गच्छति इत्येकर्षि सूर्य एकाकी चरतीति मन्त्रवर्णात्, अथवा ऋषिर्द्रष्टा सूर्यस्य जगदेक चक्षुष्ट्वात् । हे यम सर्वस्य नियन्तृ हे सूर्य सरति आकाशे चलतीति सूर्यः अथवा सुवति कर्मणि लोकं प्रवर्तयतीति सूर्यः । हे प्राजापत्य, प्रजापतेः परमेश्वरस्य हिरण्यगर्भस्य वा पुत्रः प्राजापत्यस्तत्सम्बोधने हे प्राजापत्य ! रश्मीन् स्वसम्बन्धिनो व्यूहापगमय, तेजः समूह संक्षिपस्वकीयं तेजः कथमेतत् तत्राह--

**तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि वायुरनिलममृतमथेदं भस्मान्तं शरीरं । ॐ ३ क्रतो स्मर कृतं स्मर क्रतो स्मर कृतं स्मर अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् युयोध्यस्मज्जु-**

(यत्ते इत्यादि) यत् ते तव कल्याणतमम् सर्वकल्याणानामतिशयेन कल्याणं तत्कल्याणतमम् रूपं स्वरूपं ते तव तत् रूपं पश्यामि द्रक्ष्यामि । यदि तव तेजसः सङ्क्षेपो न स्यात् तदा त्वदीयं तादृशं रूपं द्रष्टुमशक्यमेव स्यात् अतस्तत्संक्षेपोऽत्यावश्यक इति भावः ।

( योसावसौ पुरुषः सोहमस्मि ) यादृशरूपवान् आत्मा तादृशरूपवानस्मि तादृक् रूपतया जानामि अहमध्यात्मतत्वविदस्मीति भावः । अर्चिरादिमार्गेण गतस्य मे मम वायुः प्राणवायुरनिलम् महावायौ लीयताम् अथ तदनन्तरं मृतमिदं शरीरमपगतप्राणो देहो भस्मान्तं भवत् स्वकारणं पृथिवीं गच्छतु तथा एतन्या वागादि देवताः स्वां स्वां प्रकृतिं गच्छन्तु । एवं च शरीरेन्द्रियादिषु आत्माभिमानवान् नाहमस्मि किन्तु देहेन्द्रियादिव्यतिरिक्तात्मज्ञानवानहमस्मीति भावः ।

( ओं क्रतोस्मरेत्यादि ) अत्र ओमिति प्रवणप्रतिपाद्यत्वात् गायत्रीचतुर्थपादलक्षणस्यादित्यस्यस्य सम्बोधनम् । हे आदित्य क्रतो स्मर क्रतूपासनं मया यदनुष्ठितं तत्स्मर कृतं च स्मर तदगतया कृतं सम्पादितं यत् कर्मान्तरं तदपि स्मर । अहं च शरीरादिविलक्षणात्मज्ञानवानस्मि कर्माणिक ब्रह्मविद्याप्रतिष्ठितश्चास्मि तस्मात्स्वकीयं यत् तव स्वरूपं तत्स्वरूपं मे प्रदर्शय मोक्षमार्गं च प्रापयेति भावः । संप्रति अर्चिरादिमार्गप्रथमपर्वस्थानीयाग्नेः प्रार्थनां दर्शयितुमाह--

(अग्ने नयेत्यादि) हे अग्ने आतिवाहिकदेव ! सु यथाशोभनेन मार्गेण

हुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ।।१।।

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य
पंचदशं ब्राह्मणम् ।।१५।।

समाप्तोऽयं पञ्चमोऽध्यायः

राये धनाय ऐश्वर्याय मोक्षायेत्यर्थः अस्मान् नय प्रापय । शोभनेति विशेषणेन दक्षिणमार्गस्य निराकरणमुत्तरमार्गस्य ज्ञापनं भवति । हे देव अतिशयेन द्योतमानत्वात देव । वयुनानि विश्वानि सर्वाण्येव ज्ञानानि त्वं विद्वान् ज्ञाता भवसि । ततो मदीयं यज्ज्ञानं तदपि त्वं जानास्येव । अस्मत् मत्तः सकाशात जुहुराणं कुटिलमेनः पापं युयोधि अपनय । यन्मदीयं पापं तद् विनाशय । येन निष्पाप उत्तरेण पथा गमिष्यामीति । ते तुभ्यं भूयिष्ठा-मधिकां नम उक्तिं नमस्कारवचनं विधेम करोमि । इदानीं तव परिचर्यान्तरं कर्तुमशक्तः केवलं भवन्तं नमस्करोम्येवेति भावः ।

इति बृहदारण्यकोनिषदि आनन्दभाष्ये पञ्चमाध्यायस्य
पंचदशं ब्राह्मणम् ।।१५।।

समाप्तोयं पंचमोऽध्यायः ।।५।।

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિઃ॥

Nagpal

श्री रामाय नमः

श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता

# बृहदारण्यकोपनिषत्

## अथ षष्ठाध्यायस्य प्रथमं ब्राह्मणम्

**ॐ ॥ यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां**

गायत्री प्राणरूपेति कथितम् कथं सा प्राणरूपैव वागादिरूपा कुतो न ? यस्मात्प्राणो ज्येष्ठश्च श्रेष्ठ वागादिभ्य इति प्राणस्य ज्येष्ठत्वश्रेष्ठत्व- प्रतिपादनाय प्राणविद्या प्रस्तूयते—

(यो ह वै ज्येष्ठं च) यः खलु योपि कोपि पुरुषः ज्येष्ठं वयसा श्रेष्ठं गुणाधिकतया वेद विजानाति वक्ष्यमाणं स एवंवित् स्वानां ज्ञातीनां मध्ये ज्येष्ठश्च श्रेष्ठश्च गुणादिभिर्भवतीत्येवं क्रमेण प्रथमतः फलमेव- प्रदर्श्य प्रकृतं वक्ति ।

( प्राणो वै इत्यादि ) प्राणो वै यो हि मुख्यः प्राणः स इन्द्रियाणां मध्ये ज्येष्ठः यतो निषेकसमयादेव प्राणस्य वृत्तिर्भवति अन्यथा योनौ- निषिक्तं रेतः पूयेत । इन्द्रियान्तराणां वृत्तिलाभस्तु पश्चाद्भवति तस्मा- त्प्राणानां वागादीनां मध्ये प्राणो ज्येष्ठः श्रेष्ठश्चापि प्राण इन्द्रियान्तरेभ्यो गुणाधिक्यात् । गुणाधिक्यं च वक्ष्यमाणरीत्या ज्ञातव्यम् । दृश्यते च लोके कश्चिज्जन्मना कुले ज्येष्ठो भवति किन्तु गुणरहितत्वात् श्रेष्ठो न भवति । कश्चिद्गुणाधिक्यात् श्रेष्ठ एव भवति द्वितीयस्तृतीयो वा किन्तु जन्मना ज्येष्ठो न भवति प्राणस्तु न तथा किन्तु जन्मना ज्येष्ठोपि गुणैः श्रेष्ठोपीति भावः । य उपासक एवं ज्येष्ठश्रेष्ठगुणसमन्वितं वेद विजानाति इन्द्रियाणां मध्ये प्राणो जन्मना ज्येष्ठो गुणैश्च श्रेष्ठ इत्येवं उपासनां प्राणस्य करोति स तादृशोपासनाप्रभावात् स्वानां ज्ञातीनां मध्ये जन्मना ज्येष्ठो

**भवत्यपि च येषां बुभूषति य एवं वेद ।।१।।**

**यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ।।२।।**

**यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति**

गुणैश्च श्रेष्ठो भवति किं च येषामितरेषां च ज्येष्ठः श्रेष्ठो भवितुमिच्छति बुभूषति तेषामपि ज्येष्ठश्च श्रेष्ठश्च भवति । न चावस्थामूलकं ज्येष्ठत्वं तदिच्छया कथं सम्पत्स्यते इति वाच्यम् प्राणवद् वृत्तिलाभस्य प्राथमिकस्यैव ज्येष्ठत्वस्य विवक्षणादिति ।।१।।

( यो ह वै इत्यादि ) यो ह वै वसिष्ठां वेद स स्वानां ज्ञातीनां मध्ये वसिष्ठो भवति । वाग् वाणी खलु वशिष्ठा तत्रातिशयेन वसुमत्त्वं वशिष्ठत्वम् योहि वाग्मी स वसुमान् भवति वाचाऽन्यान्पराभूय । अतो वाचो वशिष्ठत्वम् । एतादृग्गुणविशिष्टां वाचो यो वेद स स्वानां ज्ञातीनां मध्ये वशिष्ठो भवति किं च येषामितरेषां बुभूषति तथा भवितुमिच्छति तेषामपि मध्ये वशिष्ठो भवतीति भावः ।।२।।

( यो ह वै इत्यादि ) यः खलु प्रतिष्ठां वेद प्रतितिष्ठति अनयेति प्रतिष्ठानां प्रतिष्ठां वेद विजानाति स प्रतितिष्ठति प्रतिष्ठितो भवति तत्र का प्रतिष्ठा तत्राह--

(चक्षुर्वै प्रतिष्ठेति) तत्रोपपत्तिं दर्शयति--

(चक्षुषा हीत्यादि) समे समतले वा दुर्गे विषमे च दृष्ट्वा प्रतितिष्ठति । एवंविदोपि एतादृशमेव प्रतिष्ठाफलं भवति तत्र चक्षुषः प्रतिष्ठितत्वं समविषमप्रदेशप्रदर्शनक्रमेण पुरुषस्य प्रतिष्ठाकारणत्वात् चक्षुषैव हि समविषमादिज्ञानं ततः पुरुषः प्रतिष्ठितो भवतीति

समे प्रतितिष्ठति दुर्गे य एवं वेद ॥३॥

यो ह वै सम्पदं वेद संहास्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्पत् श्रोत्रे हीमे सर्व्वे वेदा अभिसम्पन्नाः संहास्मै पद्यते यं कामं कामयते य एवं वेद ॥४॥

यो ह वा आयतनं वेदायतनं स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनं स्वानां भवत्यायतनं जनानां य एवं वेद ॥५॥

यो ह वै प्रजातिं वेद प्रजायते ह प्रजया पशुभिरेतो वै

भावः ॥३॥

( यो ह वै सम्पदमित्यादि ) यः खलु सम्पद्गुणविशिष्टं वेद विजानाति स यं कामं कामयते अभिलषति तस्मै तत्सर्वं सम्पन्नं भवति किं पुनः सम्पत् तत्राह--

( श्रोत्रं वै सम्पत् ) श्रोत्रेण सर्वे वेदा अभिसम्पन्ना भवन्ति वेदानां शब्दरूपत्वात् श्रोत्रस्य ग्राहकत्वात् यश्च श्रोत्रं सम्पत् गुणविशिष्टं विजानाति तस्य काम्यमानः सर्वोऽपि कामोऽभिसम्पन्नो भवतीति भावः ॥४॥

( यो ह वा आयतनमित्यादि ) यः खलु आयतनं विजानाति स स्वानामायतनं भवति । किं तदायतनं तत्राह--

( मन इत्यादि ) मन आयतनमाश्रयः वागादीन्द्रियान्तराणां मनोधीनव्यापारवत्त्वेन इतरेन्द्रियापेक्षया मनस आश्रयत्वं भवति य उपासको मनस आयतनभावं विजानाति स स्वानां ज्ञातीनामाश्रयो भवति । इतरजनानामप्याश्रयो भवति उपासनाबललब्धस्वेच्छाबलादिति भावः ॥५॥

प्रजातिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥६॥

ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति तं होवाच यस्मिन्व उत्क्रान्त इदं शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥७॥

(यो ह वै प्रजापतिमित्यादि) यः खलु पुरुषः प्रजापतिं प्रजननेन्द्रियं विजानाति प्रजया पुत्रपौत्रादिलक्षणया पशुभिर्गवादिभिश्च प्रजायते प्रकृष्टतया जायते पुरुष इति प्रजापतिरिति ॥६॥

चक्षुरादीनामिन्द्रियान्तराणां गुणान् तदुपासनफलं च प्रदर्श्य प्राणस्य श्रेष्ठत्वप्रतिपादनायोपक्रमते ।

( ते हेमे प्राणा इत्यादि ) ते इमे वागादिकाः प्राणाः अहं श्रेयसे अहमेव सर्वेभ्यः श्रेयान् प्रशस्तोऽहमेव सर्वेभ्यः श्रेयानित्येवंरूपेण विवदमाना विरुद्धं वदनं कुर्वाणाः स्वकीयं विवादमुपशमयितुं ब्रह्म अस्मासु के श्रेष्ठा इति निर्णेतुं चतुर्मुखं कमलासनलोकाधिपतिप्रति तानि मिलित्वा जग्मुर्गतवन्तो अभवन् ते सर्वे तत्समीपं गत्वा निर्णेतुं चतुर्मुखं ते सर्वे ऊचुरुक्तवन्तः को नो वसिष्ठ इति । हे पूजावन् ! श्रेष्ठत्वविषये अस्माकं विवादो जात इति भवन्तं वयं पृच्छामो यत् नोऽस्मासु मध्ये को वशिष्ठः कोऽतिशयेन श्रेष्ठो भवतीति कथय येन विवाद उपशान्तो भवतीति ।

(श्रुत्वा तद्धोवाच) तत् ब्रह्म चतुर्मुखो निर्णयायोवाच प्रोक्तवान्

(यस्मिन् वै इति) निश्चयेनास्मात् शरीरात् उत्क्रान्ते गते सति इदं परिदृश्यमानमिन्द्रियाधिष्ठानं मां च भौतिकं पापीयोऽतिशयेन पापिष्ठं घृणितमिव लोको मन्यते स वो युष्माकं मध्ये वशिष्ठ इति यत्सत्ये शरीरं शोभनमिति मन्यते लोके यस्य च शरीरेऽभावे शरीरं पूतियुतं भवति, भवति स युष्माकं मध्ये सर्वतः श्रेष्ठ इति भावः ॥७॥

**वाग्घोच्चक्राम सा संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा कला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥८॥**

एवं चतुर्मुखवचनं श्रुत्वा सर्वे ते वागादयः स्वस्य स्वस्य वसिष्ठत्वं परीक्षितुं मनो दधे, तत्र प्रथमतो वागिन्द्रियमस्मात् शरीरादुच्चक्राम शरीराद्बहिर्निगतम्, शरीरं परित्यज्यान्यगतमिवाभूत् स्वव्यापाररहितं शरीरमकरोदित्यर्थः ततः सा वाक् सम्वत्सरं वर्षपर्यन्तं प्रोष्यान्यत्र शरीरातिरिक्तप्रदेशे आत्मनो अवस्थानं कृत्वा पुनरागत्य पूर्ववदेव शरीरोऽवस्थितान् इतरप्राणान् स्वस्वव्यापरे संलग्नान् दृष्ट्वा, उवाचोक्तवती ऋते मां कथं केन प्रकारेण यूयं जीवितुं स्वप्राणधारणं कर्तुं शक्ता अभवन् इति । मदृते एते विनष्टा अवश्यमेव भविष्यन्तीत्येवं निश्चयो वाच आसीत् परन्तु वर्षादनन्तरं यदा प्रत्यागता तथा जीवन्तमेवेतरेन्द्रियवर्गं दृष्ट्वा साश्चर्यं पृष्टवतीति भावः । एवं जीवनविषयकतत्प्रश्नं श्रुत्वा ते इतरे प्राणा होचुरुक्तवन्तः हे वाक् ! यथा येन प्रकारेण अकला मूका वाचा वाण्याअवदन्तः वाणीद्वारा व्यवहारमकुर्वाणा अपि प्राणेन प्राणन्तो जीवनव्यापारं कुर्वन्तः श्रोत्रेण शृण्वन्तः श्रोत्रेन्द्रियद्वारा शब्दं गृह्णन्तः चक्षुषा चक्षुरिन्द्रियेण पश्यन्तो रूपं रूपवन्तं च गृह्णन्तो मनसा विद्वान् इन्द्रियोपनीतान् रूपादिकान् बाह्यानान्तरांश्च जानन्तः रेतसा प्रजायमानाः सन्तः एव यथोक्तप्रकारेण तत्तत्कार्यं कुर्वाणा मूकवद् वयमजीविष्यो जीवनव्यवहारं कुर्वाणा आस्म इति होचुरेवं एवं वागिन्द्रियेण विनापि तेषां मूकवत् सर्वं व्यवहारं दृष्ट्वा स्वकीयाप्राधान्यं विनिश्चित्य लज्जितेवाऽस्मिन्शरीरे वाक् वागेन्द्रियं प्रविवेश प्रविष्टवतीति ॥८॥

चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा अन्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ।।९।।

श्रोत्रं होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम् ।।१०।।

मनो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होकुर्यथा मुग्धा अविद्वांसो मनसा प्राणेन

ततो निवृत्तायां वाचि स्वकीयप्राधान्यं परीक्षितुं चक्षुः स्वव्यापारम-दर्शयदिति दर्शयति—

( चक्षुर्होच्चक्रामेत्यादि ) तदनन्तरं चक्षुश्चक्षुरिन्द्रियमस्माच्छरीरात् उच्चक्राम बहिर्गतमिवाभूत ततो देहाद्विनिर्गत्य संवत्सरं वर्षपर्यन्तमन्यत्र प्रोष्यस्थित्वा पुनरागत्योवाचोक्तवत् मदृते मामन्तरेण यूयं कथं केन-प्रकारेण जीवितुंप्राणितुमशकत समर्थाः कथमभवन् इति । ततस्ते इतरे प्राणाश्चक्षुरिन्द्रियं प्रत्यूचुः यथा अन्धा नेत्रविकलाश्चक्षुषा अपश्यन्तोपि चक्षुर्व्यापाररहिता अपि प्राणेन प्राणन्तो जीवन्तो वाचा वदन्तः श्रोत्रेण शृण्वन्तो मनसा विद्वांसो विजानन्तो रेतसा प्रजायमाना भवन्ति एव-मेवान्धवदेव वयमजीविष्मन्तो जीवनयात्रां निर्वाहयन्तोऽभवन्निति । एवं स्वाभावोपि सर्वेषां यथायथं व्यापारं जीवनयात्रोपश्रुत्य चक्षुश्चक्षुरिन्द्रियं शरीरे प्रविवेश स्वकीयं प्राधान्याभिमान परित्यज्येति भावः ।।९।।

एवं श्रोत्रं होच्चक्रामेत्यारभ्य रेतो होच्चक्रामेतिमन्त्रपर्यन्तं मंत्रा

वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवम-जीविष्मेति प्रविवेश ह मनः ॥११॥

रेतो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वांसो मनसैवजीविष्मेति प्रविवेश ह रेतः ॥१२॥

अथ ह प्राण उत्क्रमिष्यन्यथा महासुहयः सैन्धवः पड्वीश-शङ्कून्संवृहेदेवं हैवेमान्प्राणान्संववर्ह ते होचुर्मा भगव उत्क्रमीर्न

व्याख्येया. केवलं बधिर मुग्धक्लीबादृष्टान्ततया तत्तन्मन्त्र वक्तव्या अन्यत्सर्वं समानमिति ॥१०-११-१२॥

मुख्यप्राणस्य निर्गमे इतरेषां निर्गमनम् मुख्यप्राणसत्वे इतरेषां सत्वमित्यन्वयव्यतिरेकाभ्यां मुख्यप्राणस्य वशित्वं प्रतिपादयितुमन्वयव्यतिरेक-गतव्यतिरेकं दर्शयितुमाह—

( अथ ह प्राण उत्क्रमिष्यन्नित्यादि ) अथेतरप्राणानां प्राधान्यपरी-क्षणानन्तर ह प्राणो मुख्यप्राण उत्क्रमिष्यन् सन् उत्क्रमणं कुर्वन् सन् यथा येन प्रकारेण लोके महा सुहयो महानश्वोऽश्वशिक्षायां शिक्षितः सैन्धवः सिन्धुदेशसमुत्पन्नः तद्देशीयाश्वानां सुहयत्वस्य लोकप्रसिद्धेः स हयः परीक्षणाय यन्त्रारूढस्तेन प्रेरितः पड्वीशशंकून् पादबन्धन कीलकान्संवृहे मूलत उत्पाटयेत् चलनाय प्रेरितः स अश्वः पादबन्धनरज्जुं तदाधार कीलकमपि मूलतो यथोत्खनति, एवमेवायं मुख्यः प्राणः शरीरान्निर्गच्छन् प्राणान् वागादीन् संववर्ह उत्खातवान् । ततो मुख्यप्राणगमनसमये स्व स्वरूपविनाशमालोचयन्तो वागादिकाः प्राणा मुख्यप्राणावस्थानं शरीरे इच्छन्तो मुख्यप्राणमूचुस्तदेव दर्शयति—

वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति तथेति ॥१३॥

सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुर्यद्वा अहं संपदस्मि त्वं तत्सम्पदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति

(ते होचुरित्यादि) ते इतरे प्राणा वागादिका मुख्यप्राणमूचुरुक्तवन्तः भगवो हे भगवन् पूजार्ह ! मा उत्क्रमीरुत्क्रमणं शरीरादूर्ध्वंगमनं मा कार्षीः मद्गमने का क्षतिरिति स्वविनाशात्मिकां क्षतिं दर्शयति—

( न वै शक्ष्याम इत्यादि ) ऋते त्वत् भवन्तं विना वयं जीवितुं प्राणयात्रांनिर्वोढुं न शक्ष्यामः समर्था न भविष्यामः एवमिन्द्रियान्तराणाम् दीनवचनं श्रुत्वा मुख्यप्राण उवाच तस्य सर्ववशिष्ठस्य मे मम यूयं बलिं पूजोपहारं कुरुत सम्पादयत मम पूजापरा भवतेत्यर्थः। ततो मुख्यप्राणेनैवमुक्ता इतरे प्राणाः स्वीकारवचनमूचुस्तथेति यथा त्वं कथयसि तथैवेतः परं करिष्यामो वयम् एतावत् कालपर्यन्तमज्ञानविमूढा वयं त्वामनादृतवन्तो नातः परं तथा भविष्यति भवतः। श्रेष्ठतामवबुध्य भवतः पूजनमेव करिष्याम इति भावः ॥१३॥

मे बलिं हरतेति प्राणाज्ञां तथेति उक्त्या स्वीकृतमिति मुख्यप्राणमनुकूलयितुमाह—

( सा ह वागुवाचेत्यादि ) सा वाक् उवाचोक्तवती हे मुख्यप्राण ! येन गुणविशेषेण विशिष्टास्मि श्रेष्ठास्मि ते गुणविशेषेण त्वमेव वशिष्ठोसि। मयि यद् वशिष्ठत्वं तत्त्वदीयव्यापाराधीनमतो मद्गुणेन त्वमेव वशिष्ठो भवसीति एतदेव वाचोबलिहरणमिति भावः । ततश्चक्षुरुवाच हे मुख्य प्राण ! विशेषेणाहं प्रतिष्ठारूपमस्मि तेन गुणविशेषेण त्वं प्रतिष्ठोसि

**मनो यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति रेतस्तस्यो मे किमन्नं किं वास इति यदिदं किञ्चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति**

मदीयव्यापारस्य भवदीयव्यापारप्रयोज्यत्वात् । एवं श्रोत्रमुवाच यदहं येन गुणेनाहं सम्पदमस्मि तद्गुणेन त्वमेव संपदसि । मनः प्रोवाच येन-गुणविशेषेण महमायतनं भवामि तेन गुणेन त्वमेवायतनमसि । ततो रेतः प्रोवाच येन गुणेनाहं प्रजापतिरस्मि तेन गुणेन त्वमेव प्रजापतिरसि सर्व-व्यापाराणां त्वदीयव्यापाराधीनत्वादिति भावः । एवमेतेषां वचनेन प्रीतः प्राणस्तेभ्य आह ।

( मे किमन्नमित्यादि ) हे वागादयः त्वदीयगुणेन स्वकीयगुणेन च विशिष्टस्य मे मम अन्नमदनीयं किम् । किं मया भोक्तव्यमित्यर्थः किं च मे वासो वस्त्रमिति मुख्यः प्राणः प्रोवाचेति । एतच्छ्रुत्वा इतरे प्राणा ऊचुः ।

( यदिदमित्यादि ) यदिदं परिदृश्यमानम् आश्वभ्य आचक्रिभ्यः आ च कीटपतंगेभ्यस्तत्तेन्नमदनीयम् आपो जलान्येव ते वासो वस्त्रम् अयं भावः कीटपतंगादिसर्वप्राणिसमूहस्य यददनीयं तत्सर्वमेवान्नं तवैवादनीय-मापश्च ते वासः सर्वप्राण्यन्नेषु प्राणस्यान्नमितिचिन्तयेत् जलेषु च वस्त्र-चिन्तनं कुर्यात् । नत्वेतावता सर्वभक्षणं प्राणस्य विधिरसम्भवात् । न वा वस्त्रस्य यत् मुख्यं कार्यमाच्छादनम् तत्कर्तव्यम् जलेनाच्छादनासम्भवात् अतस्तच्चिन्तनमात्रमेव विधेयम् इति । सर्वेषां प्राणिनामन्नेषु प्राणस्यान्न-चिन्तनं स्तुवन्नाह—

( न ह वेत्यादि ) अस्मै तादृशचिन्ताशीलस्योपासकस्यानन्न-भक्ष्यम् जग्धं भक्षितं न वा भवति अभक्ष्यभक्षणजनितो दोषो न भवति,

नान्नं परिगृहीतं य एवमेतदन्नस्यान्नं वेद तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते । १४।।

## इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ।।१।।

नान्नं प्रतिगृहीतं भवति अन्नं व्रीहियवादिकम् अनन्नं तद्भिन्नमुपभोगप्रयोजकं सुवर्णगवाश्वादिकम् प्रतिगृहीतमन्येभ्यो गृहीतं न भवति । यथा अन्नेतरगवाश्वादीनां यः प्रतिग्रहोत्तेदानरूपेण स्वीकरणं तत्पापप्रयोजकं न भवति, गवाश्वादिप्रतिग्रहजनितमपुण्यं प्राणविदो न भवतीति भावः । सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनादितिब्रह्मसूत्रे सर्वस्याप्यन्नस्यानुमतिरिति प्रदर्शितम् तदपि तत्र प्राणविनाशविषयत्वसमर्थनेनाभक्ष्यभक्षणादौ दोषाभावप्रतिपादनं यत् कृतम् तत् अपि प्राणात्ययद्यापद्विषयकमेव नतु सार्वत्रिकमिति ज्ञातव्यम् यथोस्तिमुनेः प्राणात्ययसम्भावने पर्युषितोच्छिष्टमाषादिभक्षणे प्रवृत्तिर्दृष्टा न तु जलपानं स्वीकृतम् । कामं मे उदपानौ विद्यते इत्याद्यग्रिमप्रकरणादिति भावः ।

( तद्विद्वांस इत्यादि ) यस्मात्कारणात् जलेषु प्राणस्य वस्त्रत्वं चिन्तनीयं तस्मात्कारणादेव श्रोत्रिया अधीतवेदा विद्वांस अशिष्यन्तो भोजनं कुर्वन्त आचामन्ति भोजनात् प्राक् आचमनं कुर्वन्ति तथा अशित्वा भोजनकरणादनन्तरपि आचामंति आचमनमथितजलपानं कुर्वन्ति । एतमेव तदनं प्राणमनग्नं वस्त्रपरिवृत कुर्वन्तः प्राणं सवस्त्रं करोमीतिमन्यन्ते, आचमनीयजलैर्वस्त्रस्थानापन्नैरेतं प्राणमनग्नं कुर्वन्तो मन्यमानास्ते विद्वांसोऽन्नभोजनात् प्राक् पश्चादपि आचमनं कुर्वन्ति । अत्रानग्नं कुर्वन्तो मन्यन्ते इति कथनेन वस्त्रत्वचिन्तनमर्थवशात एव सिद्धं भवति यतोऽनग्नताया

# अथ षष्ठाध्याये द्वितीयं ब्राह्मणम्

**श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम स आजगाम जैवलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याऽभ्युवाद कुमार ३ इति स भो ३ इति प्रतिशुश्रावानुशिष्टोऽन्वसि पित्रेत्योमिति होवाच ॥१॥**

वस्त्रकार्यत्वदर्शनात् तत्र वासत्वचिन्तनमार्थिकमेवेति भावः ॥१४॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

अनेकज्वालाजटिलसंसारसागरात्वैराग्यमुत्पादयितुं शरीरेन्द्रियादिव्यतिरिक्तजीवयाथात्म्यविषयां पञ्चाग्निविद्यां दर्शयितुमुपक्रमन् विद्यास्तुत्यर्थमाख्यायिकेयमारभते—

( श्वेतकेतुर्हेत्यादि ) नामतः श्वेतकेतुः आरुणेयः अरुणस्यापत्यं पुमानारुणिर्गौतमः तदपत्यं पुमानारुणेयः पंचालानां तदाख्यदेशानां परिषदं सभामाजगामागतवान् पित्रा गृहीतविद्यः स्वकीययशः प्रकटयितुं पंचालसभां गत्वा सभासदस्थं राजानं च जित्वा प्रख्यातसुविद्यः स्यामिति विचार्य तत्सभामनुप्राप्त इति भावः। स श्वेतकेतुः जैबलिं जीवस्यापत्यं प्रवाहणनामकं राजानं परिचारयमाणं स्वभृत्यैरात्मनः सेवोपरिचरणं कारयन्तमाजगामागच्छत् पंचालदेशमवाप्य राजसभां प्राप्य राजसमीपं प्राप्तवानित्यर्थः। अतः खलु स प्रवाहणो राजा श्वेतकेतोर्विद्याभिमानिनं ज्ञात्वा गताभिमानोऽयं भवतु इति विचार्य समागतं त श्वेतकेतुमुदीक्ष्य दृष्ट्वा हे कुमार! इति अभ्युवादामन्त्रितवान्। प्लुतिरत्र भर्त्सनार्थिका। कुमारा इति सम्बोध्य भर्त्सनं कृतवानित्यर्थः। तदनन्तर स श्वेतकेतुर्भो इति प्रतिशुश्राव प्रत्युतर ददावित्यर्थः। ततो राजा प्रोवाच हे कुमार! स्वकीयपित्रा अनुशिष्टोऽसि पित्रा प्राप्तविद्यो भवान् किमिति। ततः श्वेतकेतुरुवाच ओमिति। पिता मां सर्वामपि विद्यामध्यापितवानित्येवं सगर्वं स उवाचेत्यर्थः ॥१॥

**वेत्थ यथेमाः प्रजाः प्रयंत्यो विप्रतिपद्यन्ता ३ इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता ३ इति नेति हैवोवाच वेत्थो यथेमं लोकं पुनः सम्पद्यन्ता ३ इति नेति हैवोवाच वेत्थो यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न सम्पूर्य्यता ३ इति नेति हैवोवाच वेत्थो यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा**

ततो राजानमपृच्छत्—

( वेत्थेत्यादि ) हे श्वेतकेतो ! इमा मानुषादिकाः प्रजाः यथा येन प्रकारेण प्रयत्यो म्रियमाणाः शरीरमिदं परित्यज्य गच्छन्त्यः विप्रतिपद्यन्ते विशिष्टं कमपि देशविशेषं प्रतिपद्यन्ते प्राप्नुवन्ति प्लुतिप्रदर्शनं प्रश्नार्थकम् इति त्वं वेत्थ विजानासि एते लोका मृत्वा कं प्रदेशविशेषं प्राप्नुवन्ति तत् त्वं जानासीति गन्तव्यप्रदेशविषयकः प्रश्न इति । एवं राज्ञा पृष्टः श्वेतकेतुरुवाच प्रोक्तवान् नेति नाहं प्रजानामि तं प्रदेशविशेषं यत्र मृत्वा लोका यान्तीति । पुना राजा पृच्छति--

( वेत्थोयथेममित्यादि ) हे श्वेतकेतो यथा येन प्रकारेण प्रदेशं प्रति गता लोका इमं परिदृश्यमानं मृत्युलोकं प्रति पुनः पुनरपि आपद्यन्ते आगच्छन्ति इति त्वं वेत्थ विजानासि ? पुनरितरः प्राह--

( नेतीत्यादि ) राजन् एतदपि नैवाहं विजानामीति होवाच सः ।
पुनरपि राजा पृच्छति—

( वेत्थो यथा सावित्यादि ) हे श्वेतकेतो यथा असौ स्वर्गलोकः बहुभिरनेकैः पुरुषैः पुनः पुन बारं बारं प्रयद्भिर्गच्छद्भिरपि न संपूर्यते न पूरितो भवतीति वेत्थ विजानासि "अहन्यहनि भूतानि गच्छन्ति यममन्दिरमि"ति स्मृतेरिति । पुनरपि नेति है वोवाच नैव जानाम्येतदिति नषेधात्मकमेवोत्तरं दत्तवानिति । पुनः पृच्छति--

**समुत्थाय वदन्ती ३ इति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वापि हि न ऋषेर्वचः श्रुतं द्वे सृती अशृणवं पितृणामहं**

( वेत्थो यावतिथ्यामित्यादि ) हे श्वेतकेतो यावतिथ्यां यावत्संख्यकायाम् आहुत्यां हुतायां सत्याम् आपो जलानि पुरुष वाचः पुरुष इति वाक् व्यवहारो या सों ताः पुरुषवाचो भूत्वा पुरुषस्वरूपतामासाद्य समुत्थाय वदन्ति अभिलपनादिव्यवहारं । वर्तयन्ति इति त्वं वेत्थ विजानासि । यावतिथ्यामित्यत्र यावती पूर्णा संख्या यावतिथि पंचसंख्येत्यर्थः छान्दोग्ये "इति तु पञ्चम्यामाहुतौ पुरुषवचसो भवतीति" श्रवणेन पंचत्वसंख्याया एवाभिमतत्वादिति । पुनरपि नैव विजानामीति नकारात्मकमेवोत्तरं नेति है वोवाचेत्यादि ग्रन्थेन कथितमिति । पुनः पृच्छति--

( वेत्थो देवयानस्येत्यादि ) हे श्वेतकेतो त्व देवयानस्यार्चिरादेः पितृयाणस्य धूमादिकस्य वा पथो मार्गान् प्रतिपदं प्रतिपद्यते प्राप्यते अनेनेति प्रतिपत् प्रथमपर्वतत्सहितं यथा स्यात् तथा वेत्थ विजानासि। पर्वसहितं देवयानमार्गं येन मृत्वा जीवो गच्छति तं तथा मृत्वा तेन धूमादि पितृयानेनगच्छति तं मार्गं विजानासीति प्रश्नः । एतदेव स्पष्टयति--

( यत्कृत्वेत्यादि ) यत्कृत्वा यदुपक्रम्य देवयान वा पन्थानं पितृयाणं वा पन्थान मार्गं प्रतिपद्यते प्राप्नोति गच्छति जीव इति देवयानपितृयाणयोर्व्यावर्तकाकारः प्रश्न इति । अत्र छान्दोग्यपचाग्निविद्याप्रकरणीयप्रश्नोपि यथासम्भवं योजनीय इति ।

( अपि न इत्यादि ) अपि च श्वेतकेतो अपि अस्मिन् देवयानपितृयानमार्गविषयं नोऽस्माकम् ऋषेर्मन्त्रस्य वचो वचनं श्रुतं किमिति । कोसौ मन्त्रस्तत्राह--

देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरञ्चेति नाहमत एकं च न वेदेति होवाच ॥२॥

अथैनं वसत्योपमंत्रयाञ्चक्रे नादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तं होवाचेति वाव किल नो भवान् पुरानुशिष्टानवोचदिति कथं सुमेध इति पञ्च मा प्रश्नान् राजन्यबंधुर-

( द्वेसृतीत्यादि ) द्वे द्वित्वसंख्याके सृती गतीमार्गे विद्येते इत्यहमशृण्वं श्रुतवानस्मि पितृृणां मार्गम् देवनां सृती मार्गम् मनुष्याणां च मार्गम् ताभ्यां देवयानपितृयानसृतिभ्याम् एजत् गच्छत् इदं प्राणिजातम् ताभ्यां सृतिभ्यां समेति ब्रह्माणमध्यवर्तिनं विश्वं लोकजातं समेति प्राप्नोति मातापितृविहीनं साकेतलोकं च समेतीत्यर्थः यथा खलु पितृयानमार्गेण ब्रह्माण्डमध्यवर्तिलोकं प्राप्नोति तथा उत्तरमार्गेण देवयानेन साकेतलोकं प्राप्नोति भगवत्-शरणैकपरायण इति भावः । यथोक्तप्रकारेण राज्ञा पृष्टः कुमार आह--

( नाहमत एकं च नेत्यादि ) अत एषां प्रश्नानां मध्यात् एकं च न किंचिदपि नाहं वेद विजानामीति एवं प्रकारेण कुमार उवाच हेति ॥२॥

( अथ हैनमित्यादि ) अथानन्तरम् कुमारस्य मौनग्रहणानन्तरं राजा एनं श्वेतकेतुम् वसतया तत्र निवासायोपमन्त्रयांचक्रे । अत्र निवासं कुरु एवं प्रार्थयामास राजा । नायं ब्राह्मणोऽनादरणीयः अनादरात् क्रुद्धो ब्राह्मणः प्रायः सर्वमेव विनाशयिष्यति अतोत्र वसतु क्रमश एनं ग्लानि-कारणनिराकरणेन सन्तोषयिष्यामीति विचार्य निवासाय प्रार्थनां कृतवान् इति भावः ।

( अनादृत्येत्यादि ) परन्तु कुमारः श्वेतकेतू राज्ञोऽभिप्रायमज्ञात्वा

**प्राक्षीत्ततो नैकञ्चन वेदेति कतमे त इतीम इति ह प्रतीकान्युदाजहार ॥३॥**

**स होवाच तथा नस्त्वं तात जानीथाः यथा यदहं किंचन वेद सर्व्वमहं तत्तुभ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति**

वसति राजसमीपे निवासमनादृत्यानादरं कृत्वा प्रदुद्राव । राजसमीपात् स्वगृहं प्रति जगामेत्यर्थः ततो निर्गत्य स श्वेतकेतुः पितरं प्रात्याजगाम स्वगृहमागतवानित्यर्थः आगत्य च तं पितरं प्रत्युवाच हे भगवन् पुरासमावर्तनसमये नोऽस्मान् भवान् अनुशिष्टान् सम्पन्नसर्वविद्यो जात इत्येव किलावोचत् प्रोक्तवानिति एवं क्रुद्धेन पुत्रेणोक्तः प्राह पिता--

( कथमित्यादि ) सुमेधः शोभनप्रज्ञावन् पुत्र कथमिति हे पुत्र कथं त्वमेवं वदसि किं ते अभूदित्यर्थः श्वेतकेतुः प्राह--

( पञ्चमेत्यादि ) स राजन्यबन्धुर्दुष्टो राजा मा मां पंचप्रश्नान् पंचसंख्यकान् प्रश्नान् अप्राक्षीत् पृष्टवान् तेषा प्रश्नानां मध्यात् एकं च न किमपि नाहं वेद नैव ज्ञातवान् राजन्यबन्धुरिति कथनेन राज्ञो निन्दामभिव्यंजितवान् इति । ततः पितोवाच कतमे ते इतीति हे पुत्र राज्ञस्ते प्रश्नाः कीदृशा आसन्निति पुत्रः प्राह—

( इमे इति हेत्यादि ) इमे इति कृत्वा प्रतीकानि प्रश्नावयवमुपन्यस्य प्रश्नानां स्वरूपं सूचितवानित्यर्थः ॥३॥

ततः पुनः पिता प्राह—

( स होवाचेत्यादि ) सः पिता गौतमः पुत्रस्य वचनमपमानजनकमिवोपसृत्य पुत्र प्रत्युवाच । हे तात प्रिय पुत्र ! नोऽस्मान् त्वं तथा जानीथाः यथा येन प्रकारेण यत्किंच यावत्सर्वमहं वेद विजातवानस्मि तत्सर्वं तुभ्यमहमवोचम् यावदहं जानामि तां सर्वामेव विद्यामहं तुभ्यं प्रोक्तवानस्मि ।

**भवानेव गच्छत्विति स आजगाम गौतमो यत्र प्रवाहणस्य जैवले-
रास तस्मा आसनमाहृत्योदकमाहारयाञ्चकाराथ हास्मा अर्घ्यं**

नहि कोऽपि पिता पुत्रप्राप्यं किमपि नावशेषयति । ततो राज्ञा पृष्टान् प्रश्नानहमपि न विजानामि अतो मया ते प्रश्नास्ते नोक्ताः । अतः प्रश्नान् तान् ज्ञातुं मया सह त्वमपि प्रेहि आगच्छ । ततो मिलित्वा आवां प्रतीत्य राजसमीपं गत्वा विद्यार्थं राजान्तिके ब्रह्मचर्यं वत्स्याव आवामिति । नहि गुरोः कुले निवासमन्तरा विलक्षणा विद्याप्राप्ता भवतीति भावः । एवं पितुर्वचनं श्रुत्वा क्रोधज्वालाजटिलः पुत्र उवाच ।

(भवानेवेत्यादि) हे पितः भवानेव तत्र गच्छतु अहं तस्य राजन्यबन्धो मुखमपिद्रष्टुं नेच्छामि ब्रह्मचर्यनिवासपूर्वकं विद्याग्रहणं तु दूरे भवतु इति भावः । पुत्रेणैवमुक्तो ऋषिः स्वयमेव तत्र गन्तुं प्रवृत्तो विद्यां तां ग्रहीतुमित्यत आह ।

( स आजगामेत्यादि ) स गौतमो गृहान्निष्क्रम्य मार्गक्रमरूपेण यत्र स्थाने प्रवाहणस्य जैंवलेः प्रवाहणो जैंवलिरास बभूव तत्राजगाम गतवान् । प्रवाहणस्य जैंवलेरित्युभयत्रापि षष्ठी प्रथमार्थे । ततश्च यत्र प्रवाहणो बभूव तत्र गतो गौतम इति यथाश्रुतार्थे तु आसनमित्यस्याध्याहारः कर्तव्यः ततश्च यत्र प्रवाहणस्य जैंवलेरासनं स्थानमभूत् तत्र गत-वानित्यर्थः तदध्याहारक्लेशो विधेयः प्रथमार्थे षष्ठी वा स्वीकर्तव्येति विचारयन्तु इति । तस्मै स्वस्थाने समागताय गौतमाय स प्रवाहणो राजा सम्मानं दर्शयन् आसनमासनमाहृत्य, उपवेशनार्थमासनं समर्प्य पाद-प्रक्षालनाद्योदकं जलमाहारयाञ्चकार भृत्यादिद्वारा जलमानीतवान्निर्मलः यथासम्प्रदायमप्रक्षालनाय जलदानानन्तरम् अस्मै गौतमायातिथये अर्घ्यं

चकार तं होवाच वरं भवते गौतमाय दद्म इति ॥४॥

स होवाच प्रतिज्ञातो म एष वरो यान्तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥५॥

स होवाच दैवेषु वै गौतमो तद्वरेषु मानुषाणां ब्रूहीति ॥६॥

मधुपर्कादिकं चकार कृतवान् तदर्थमर्घ्यादिपूजासामग्रीमकल्पयदित्यर्थः । पूजोपहारमुपकल्प्योवाचेति दर्शयति—

( तं होवाचेत्यादि ) तं कृतातिथ्यं गौतमं प्रति राजोवाच भगवते पूजावते गौतमाय वयं वरं गवादिसुवर्णादिलक्षणं दद्मः प्रयच्छाम इत्येवं क्रमेणोक्तवान् स इति ॥४॥

तदनन्तरं वरं भवते दद्म इति कथनान्तरं स गौतमो होवाच हे राजन् वरो दीयते इत्येवं भवान् प्रतिज्ञामकरोत् चेत्तदा यां वाचम् मम कुमारस्य-पुत्रस्यान्तेऽग्रे समीपे इत्यर्थः अभाषः कथितबान् तामेव वाचं वचनं मे मह्यम् ब्रूहीति कथय । मत्पुत्रं यत् यत् पृष्टवानसि तं तं प्रश्नमनुवादपूर्वकं प्रकाश्य तदुत्तरं मे कथयेत्यर्थः ॥५॥

ततो राजा प्राणविद्याविषयकं ब्राह्मणो वरमिति ज्ञात्वा प्राहेति दर्शयितुमाह—

( स होवाचेत्यादि ) ब्राह्मणवचनं श्रुत्वा स प्रवाहणो राजा प्रोवाच-हे गौतम त्वं यद्वरं प्रार्थयसे तत् दैवेषुवरेषु दैववरेष्वनन्तरगतम् तदरं मत्सकाशात् अप्रार्थनीयमेव । यत् एतद्विद्यायाः क्षत्रियभिन्नेष्वद्यावधिगमन-स्यादर्शनादिति वक्ष्यमाणत्वात् । तस्मात्तत्परित्यज्य मानुषाणां मनुष्य-सम्बन्धिवराणां मध्यात् यत्किचिद्वरं हिरण्यगवादिलक्षणं तदेव देहयात्रा-निर्वाहाय त्वया प्रार्थनीयमित्यतो मानुषवरमेव ब्रूहि प्रार्थनं कुरु इति ॥६॥

तच्छ्रुत्वा स गौतम उवाच, हे राजन् तव हिरण्यस्यापात्रं प्राप्तिस्तथा

**स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गो अश्वानां दासीनां प्रवाराणां परिधानस्य मा नो भवान् बहोरनन्तस्यापर्य्यन्तस्याभ्यवदान्योऽभूदिति स वै गौतम तीर्थेनेच्छासा इत्युपैम्यहं**

गोअश्वानां धनानाम् दासीनां प्रवराणाम् प्रच्छदपटानाम् अधोंशुकलक्षण परिधानस्य मानुषवरे प्राप्तिरस्तीति मया विज्ञायते एतद्वरैर्मानुषैर्मे प्रयोजन नास्ति । भवद्भिर्दीयमानमानुषवरेषु योगक्षेमनिर्वाहकत्वमेव तत्तु अन्यथापि निर्वहत्येव तदर्थमेतावान् प्रयासो मे निरर्थक इति कृत्वा नाहं तद्वरं प्रार्थये किन्तु विलक्षणमेव वरं देहीति भावः । एतदेव स्पष्टयति—

(मा नो भयानित्यादि) बहोः प्रभूतस्य अनन्तस्यानन्तफलस्य पुत्रादि-गामिनो विद्यालक्षणधनस्य नोऽस्मभ्यं भवान् अवदान्यो मा भूत् । सर्वेषां त्वं दातासि तत्कथं मह्यं न ददासि वदान्यतया ते लोके प्रसिद्धिरस्ति तद-कस्मात् मां प्रत्येवादानशक्तिः कथमिति ततो मदीप्सित यत्तद्देहीति भावः । गौतमेन वाचोभंग्या प्राणविद्यार्थमुक्तो राजा तस्योत्कटामिच्छां ज्ञात्वा तस्मै विद्योपदेशाय कथं विद्याप्राप्यते गुरुसकाशादिति बोधयितुमाह—

( स वै गौतम इत्यादि ) हे गौतम यदि त्वं मत्तो विलक्षणां विद्यां प्राप्तुमिच्छसि तदा स त्वम् तीर्थेन न्यायतः तरति यस्योपदेशेन तत्तीर्थम् शास्त्रम् शासनादेतत् शास्त्रम् । ततश्च तीर्थेन शास्त्रप्रदर्शितप्रकारेण "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमुपगच्छेदि" त्यादि शास्त्रोदितप्रकारेण मत्सकाशात् विद्यामिच्छासा इच्छस्व । यदि मत्तो विद्यां ग्रहीतुमिच्छसि तदा शास्त्रवर्णितप्रकारेण तां गृहाणेत्यर्थः । एवं प्रवाहणेनोक्तो गौतमः प्रत्याह हे राजन् अहं गौतमो भवन्तं शिष्यत्वेनोपैमि उपगच्छामि भवतः शिष्यत्वं स्वीकरोमीत्यर्थः । ननु कथं ब्राह्मणो भूत्वा स्वापेक्षया हीनस्य शिष्यत्वं स्वकीचकारेत्यत आह—

भवन्तमिति वाचा ह स्मैव पूर्व उपयन्ति स होपायनकीर्त्या उवास ॥७॥

स होवाच तथा नस्त्वं गौतम मापराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवास तां त्वहं तुभ्यं

( वाचेत्यादि ) वाचा वाङ्मात्रेण शिष्यत्वमुपगतो न तु कर्मणा शिष्यत्वमवाप्तवानिति । अत्रार्थे पूर्वकालिकमुपगमनं श्रुतिर्दर्शयति—

( स्मैव पूर्व इत्यादि ) पूर्वे पूर्वकालिका ब्राह्मणाः स्वापेक्षया हीनान् वर्णान् उपयन्ति स्म वै किल वाचैवोपगमनं कुर्वन्ति नतु शिष्यवृत्त्योपगच्छन्ति । अतः पूर्वकालिकवृत्तान्तमनुज्ञाय स गौतमोपि उपायनकीर्त्योवास । भवतः शिष्यत्वं स्वीकरोमीति वचनमात्रेणैवोवासोषितवान् तत्समीपे न तु अनुव्रजन् शुश्रूषादिकं कृतवानित्यर्थः ॥७॥

ततो गौतमेन वचसा शिष्यत्वस्वीकरणानन्तरं स राजा ब्राह्मणं क्षमापयितुं विद्याया एतस्या इतः पूर्वं ब्राह्मणैरलभ्यतां दर्शयितुं क्षत्रियशिष्योऽयमिति कृत्वा ब्राह्मणपरिषदि गौतमस्यानादरातिशयं निवर्तयितुं विद्यां स्तुवन् प्राह—

( स होवाचेत्यादि ) ततः स राजा गौतममुवाच आह— हे गौतम तव पितामहाः पितुरपि पितरो यथा मम पूज्या अभवन् । तेषु यथा मम पूज्यबुद्धिरासीत् इमे ब्राह्मणाः क्षत्रियैः पूज्या इति कृत्वा तथा तेन प्रकारेणैव त्वमपि सर्वब्राह्मणगुणसम्पन्नः पूज्य एव नात्र कोपि संशय इत्यर्थः । अतो मया यत्कथितम् शास्त्रविहितप्रकारेण मामुपगच्छेत्यादिना विश्वासार्थमनाद्यादेशो दत्तः सोपराधो भवता न गणनीयः यत् इयं वक्ष्यमाणा विद्या प्राणविद्याख्या इतः पूर्वं तदुपदेशात् पूर्वकाले कस्मिंश्चिदपि ब्राह्मणे तत्कुले वा नोपासनोषितवती । इतः पूर्वं ब्राह्मणसमीपे

वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥८॥

असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मि-

विद्येयं कदापि न गतवती किन्तु क्षत्रियकुले एवासीदित्यर्थः। तां तादृशीम् ब्राह्मणैः सर्वविद्याविशिष्टैरप्यलब्ध्वा विद्यां तुभ्यमहं वक्ष्यामि कथयिष्यामि उपदेक्ष्यामीत्यर्थः को वा पुरुष एवं स्वापेक्षयाहीनं प्रति शिष्योऽहं भवामीति ब्रुवन्तं वदन्तं त्वां प्रत्याख्यातु निन्दितु कोऽर्हतीति कः समर्थः स्यात् न कोऽपीत्यर्थः। अतः क्षत्रियव्यतिरिक्तैरलभ्यां विलक्षणां विद्यां तेऽहं वक्ष्यामीति भावः ॥८॥

पूर्वं ये ये प्रश्नाः पृष्टास्तेषां प्रतिवचनं दातुं प्रक्रमन्—

( यावतिथ्यामाहुत्यामित्यादि ) प्रथमप्रश्नस्य प्रतिवचनं दातुमाह—

(असौ वेत्यादि) हे गौतम असौ द्युलोक एवाग्निः तदत्र द्युलोकेऽग्निबुद्धिः करणीयेत्यर्थः। तस्य द्युलोकस्य समिदिन्धनस्थानापन्न आदित्यः सविता। यतः सवितुः प्रकाशेन द्युलोकः प्रकाशितो भवतीति। रश्मय आदित्यस्य किरणा एव धूमः अहोदिवैवार्चिः प्रकाशवत्त्वस्योभयत्रापि समानत्वात्। दिशः पूर्वादिका अङ्गारा अङ्गारतुल्या अवान्तरदिश ईशानादिकाः विस्फुलिंगा क्षुद्राङ्गाराः यदा खलु अहोरूपार्चिः प्रादुर्भवति तदैव दिशोऽवान्तरदिशश्चाभिव्यक्तिर्भवति प्रकाशाभावे दिगभिव्यक्तेरदर्शनात् अतो दिशोऽवान्तरदिशश्चांगारत्वविस्फुलिंगत्वमिति।

तस्मिन् एतस्मिन् द्युलोकात्मकेऽग्नौ आदित्यात्मकेन्धनप्रज्वालिते रश्म्यात्मक धूमविशिष्टेऽहरर्चिषोपेते दिगादि अङ्गारविस्फुलिंगयुक्ते वह्नौ देवा इन्द्रियाणि श्रद्धांजलं जुह्वति होमं कुर्वन्ति। "अत्र श्रद्धा वा आपः" इति श्रुत्यन्तरेण श्रद्धाशब्देनापामेव ग्रहणं भवति। यथा श्रुतार्थकत्वे आत्मधर्म-

अग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भवति ॥९॥

पर्जन्यो वाऽग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुत्यै वृष्टिः सम्भवति ॥१०॥

अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो

भूतायाः श्रद्धाया हवनासम्भवात् तत्रापि जलमात्रं न श्रद्धा किन्तु आप इति पदं भूतसूक्ष्माणां सर्वेषां संग्राहकम् । देवा जुह्वतीत्यत्र देवशब्देनेन्द्रियाणां ग्रहणं ते देवा इन्द्रियाणि श्रद्धापदबोध्यं भूतसूक्ष्मोपसंसृष्टं जलं जुह्वतीत्यर्थः तस्यै आहुत्यै तस्या जललक्षणाहुतेः सोमो राजा सम्भवति देवभोगोपयोगि दिव्यदेहयुक्तो भवति यावता तत्रत्यपदार्थोपभोगो भवतीति भावः ॥९॥

( पर्यन्य इत्यादि ) हे गौतम पर्जन्यो वृष्टिप्रवर्तको देवविशेष एवाग्निर्होमाधिकरणम् । तस्य पर्यस्याग्नेः संवत्सरो द्वादशमासात्मककालविशेष एव समित् इन्धनस्थानीयः यथा भौतिकोग्निः काष्ठेन समिद्धो भवति तथैव शरादादिक संवत्सरावयवरेवपर्यन्यलक्षणाग्निर्दीप्यते । अभ्राणि मेघा एव धूमः धूमस्थानापन्नाः विद्युदेवार्चिः प्रकाशकत्वसामान्यात् । अशनिरङ्गाराः ह्रादुनयो मेघशब्दाः विस्फुलिंगाः क्षुद्राग्निकणाः विप्रकीर्णत्वानेकत्वसाधर्म्यात् तस्मिन्नेतस्मिन् पर्जन्यलक्षणाग्नौ देवाः सोमं राजानं जुह्वति होमं कुर्वन्ति । स्वर्गस्थो हि पुरुषः कर्मफलानामुपभोगेन समाप्तिसमयेऽमृतमयदिव्यदेहवान् द्रवीभूतः सन् देवपद बोध्येन्द्रियैः सहैव पर्जन्ये निपततीत्यर्थः तस्यै आहुत्यै तस्या आहुतेः वृष्टिः सम्भवति वर्षणं जायते इति भावः ॥१०॥

रात्रिरर्चिश्चन्द्रमाऽङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवो वृष्टिं जुह्वति तस्या आहुत्या अन्नं सम्भवति ॥११॥

पुरुषो वाऽग्निर्गौतम तस्य व्यात्तमेव समित्प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः सम्भवति ॥१२॥

योषा वा अग्निर्गौतम तस्या उपस्थ एव समिल्लोमानि धूमो

( अयं वै लोक इत्यादि ) हे गौतम अयं वै परिदृश्यमानो लोकः पर्वत समुद्रादिपरिविष्टितो भूभागः स एवाग्निः तस्यै तल्लोकस्याग्नेः पृथिव्येव समित् इन्धनम् पृथिव्यंश एव समिदित्यर्थः । अग्निरयं परिदृश्यमान एव वह्निः लोकाग्नेर्धूमः । धूमस्यार्द्रेन्धनाश्रितत्वात् अग्निरपि पृथिवीलक्षणसमिदाश्रित इत्याश्रितत्वस्योभयत्र समत्वादग्निर्धूम इति ।

( रात्रिरर्चिः ) अर्चिः प्रकाशस्य रात्रावभिव्यज्यमानत्वात् व्यंजकत्वाद् रात्रिरर्चिरिति । चन्द्रमा अङ्गारालोकाग्नेः तथैतस्य लोकाग्नेर्नक्षत्राणि विस्फुलिङ्गा क्षुद्रत्वसामान्यात् । एतस्मिन् लोकाख्येऽग्नौ देवा वृष्टिं जुह्वति तया वृष्ट्या पृथिव्यामन्नं व्रीहियवादिलक्षणं संभवति प्रादुर्भवति अन्नोत्पत्तेर्वृष्ट्यधीनत्वादिति भावः ॥११॥

( पुरुषो वेत्यादि ) हे गौतम अयं पुरुषः शिरःपाण्यादिमान् स एवाग्निरग्निकल्पः तस्य पुरुषाग्नेर्व्यात्तं विवृतं मुखमेव ससमित् इन्धनम् । प्राणो धूमोवागिन्द्रियमर्चिः प्रकाशकत्वस्य वाचि अर्चिषि च समानत्वात् वागिन्द्रियमर्चिरिति चक्षुरंगाराः श्रोत्रे विस्फुलिंगास्तदेतस्मिन् पुरुषाग्नौ देवा व्रीहियवादिकमन्नं जह्वति तस्या आहुतेः सकाशात् रेतो वीर्यं सम्भवति अभिजायते इति ॥१२॥

( योषा वेत्यादि ) हे गौतम योषा स्त्रीः सैवाग्निः तस्याः स्त्रिय

योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मि-न्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः सम्भवति स जीवति यावज्जीवत्यथ यदा म्रियते ॥१३॥

अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गाः

उपस्थ एव समित् उद्दीपकत्वसामान्यात् लोमानि गुह्येन्द्रियसंवाग्नि धूमो वर्णसामान्यात् योनिर्गुह्येन्द्रियमर्चिः उभयोर्वर्णसमत्वात् । यदन्तः करोति तेऽङ्गारा मिथुनीकरणमेवांगारा इत्यर्थः अभिनन्दा आनन्दलवाः विस्फुलिङ्गाः क्षुद्रत्वस्य चोभयत्रापि तुल्यत्वात् । तदेतस्मिन योषाग्नौ देवा रेतो जुह्वति तस्या आहुत्याः पुरुषः सम्भवति समुत्पद्यते । एवं च यावतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्तीत्यस्य प्रश्नस्योत्तरं राज्ञा सविस्तरेण प्रतिपादितमिति । अतः परमन्येषामपि प्रश्नानामुत्तरं दातुं तदनुकूलं प्रसंगं सम्पादयितुमाह—

( स जीवतीत्यादि ) स पुरुषो यथोक्तप्रकारेण रेतोलक्षणायामाहुतौ पुरुषाकारो भूत्वा जीवति श्वासादिव्यवहारं कुर्वन् शरीरयात्रां निर्वाहयन् स्थितो भवति, कियत्पर्यन्तं जीवति तत्राह—

( यावदित्यादि ) यावत्कालपर्यन्तमेतत् शरीरस्थितिसम्पादकं प्रारब्धं पुण्यापुण्यलक्षणं विद्यमानं भवति तावत्कालपर्यन्तमयं जीवो जीवतीति । अथ यदा एतद्देहनिर्वाहककर्मणो विनाशो जायते उपभोगात्-दनन्तरं स म्रियते एतत्स्थूलशरीरं त्यजतीति ॥१३॥

( अथेत्यादि ) अथ मरणानन्तरमेनं मृतं पुरुषमग्नयेऽग्न्यर्थम् अग्नौ हवनायेत्यर्थः हरन्ति बान्धवादि ऋत्विजो वनं नयेति षष्ठाहुतिसम्पादनाय वनं नयन्तीत्यर्थः । तस्याग्निरेवाग्निः पंचमाहुतिपर्यन्तं स वै ब्रह्मादिकाः

**तस्मिन्नेतस्मिन्नग्नौ देवः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः सम्भवति ।।१४।।**

**ते य एवमेतद्विदुः ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिच्च-रभिसम्भवन्ति अर्चिषोऽहरन्ह आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान्**

कल्पिता एवाभवन् अत्र षष्ठाहुतौ अग्न्यादिकं न काल्पनिकमपि व्यावहारिकमेव सर्वमिति । तस्मिन् एतस्मिन् अग्नौ देवा ऋत्विजः पुरुषं तं जुह्वति "असौ वाव स्वर्गाय लोकाय स्वाहे" ति मन्त्रेण तस्या आहुत्याः यथोक्तक्रमेण पुरुषयजमानस्य हवनानन्तरमयं पुरुषो भास्वरवर्णो भवति देदीप्यमानदेहो निष्पद्यते । इतो मृत्वा देवलोकं प्राप्नोति देदीप्यमानदेहो भूत्वा । पुनरपि स्वर्गापादककर्मणामुपभोगेन क्षये सति पुनरपि पूर्वोक्तक्रमेण द्युलोकादारभ्य पञ्चाग्निपर्यन्तमागमनमित्येवं संसारगतिप्रदर्शनेन वैराग्यमभिव्यंजितमिति ।।१४।।

सम्प्रति प्रथमप्रश्नस्य निर्णयार्थमिदमारभते—

( य एवमित्यादि ) ते ये एवं यथोक्तप्रकारेण एतत् पंचाग्नीन् विदुर्विजानन्ति अन्तरिक्षपर्यन्तं पृथिवी पुरुष वनितालाभ पारमार्थिकाग्निषु श्रद्धा सोमवृष्टयन्नरेतःसम्बद्धतया गमनागमनं कुर्वाणं जीवात्मानं ब्रह्मात्मकत्वेनोपासनं कुर्वन्ति ये इत्यर्थः ये चामी पुरुषा अरण्ये जनविविक्तवने निवसन्तः श्रद्धां श्रद्धां पुरस्कृत्य सत्यं सत्यपदबोध्यं परमेश्वरं प्रत्यगात्मनि जीवे समुपासते ते पुरुषाः पंचाग्निज्ञानवन्तः परमात्मोपासकाश्च अर्चिः तदभिमानिनं देवमभिसम्भवन्ति तेन सह संगता भवन्तीत्यर्थः तदनन्तरं ते अर्चिषोऽहरहरभिमानिदेवेन सह संगता भवन्ति । ततोऽह्न आपूर्यमाण पक्षं तदभिमानिदेवमभिसंभवन्ति ततो मासमभिसम्भवन्ति । ततो मासेभ्यः संवत्सरम् । छान्दोग्ये मासानन्तरं संवत्सरस्य श्रवणात् ततो देवलोकं

**षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान् वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति**

वायुमभिसम्भवन्ति । अत्र देवलोकशब्दो वायुलोकपरकः "योयं पवते एष देवानां गृहे" इति श्रुतेः । ततो देवलोकाद्वायुलोकादादित्यलोकमभिसंभवन्ति । आदित्यात् चन्द्रमसमभिसंभवन्ति चन्द्रमसो वैद्युतमभिसंभवन्ति । छान्दोग्ये "आदित्याच्चन्द्रमसं चन्द्रमसो विद्युत" मिति श्रवणात् अत्रापि अदित्यवैद्युतमध्ये चन्द्रमसो ग्रहणमावश्यकमेवेति । आदित्याच्चन्द्रमसं प्राप्य तद्द्वारा विद्युदभिमानिनं देवं प्राप्नुवन्तीति । वैद्युतात् वैद्युतः पुरुषोऽमानवः मानवव्यतिरिक्तः सृष्टेः प्रारम्भसमये एव परमकृपालुना परमेश्वरेण लोकानामुपकाराय सृष्टः स पुरुषो वैद्युतः एनान् पंचाग्निविदो ब्रह्मलोकान् ब्रह्मैव लोको ब्रह्मलोकः तान् ब्रह्मलोकान् गमयति प्रापयति। ब्रह्मलोकानित्यत्र कर्मधारयसमास एव लक्षणाया अभावात् । ब्रह्मलोक इति षष्ठी तत्पुरुषपरिग्रहेपि न कोपि दोषः इति मे भाति । ननु यदि अनेके ब्रह्मलोका भवेयुस्तदात्र बहुवचनं सम्भवेत् परन्तु न त्वेवं ब्रह्मलोकस्यैकत्वादिति कथमत्र बहुवचमिति चेदत्रोच्यते भावानवबोधात् । अयमाशयः भगवान् साकेताधिपतिर्ब्रह्मसर्वसतः परिपूर्णः सत्यसंकल्पवांश्च "न तस्य कार्यं करणं च दृश्यते" इत्यादि श्रुतिस्मृतीतिहासपुराणादिप्रामाण्यात् । ततश्च श्रुत्यादिप्रामाण्यानुसारेण स्वेच्छापरिकल्पितस्वासाधारणाप्राकृतानन्तलोकसम्भवेन बहुवचनप्रयोगे क्षत्यभावात् । अन्यत्रापि श्रूयते "परमेश्वर शक्तिलागयामलावूलतावत् सहस्रोऽणुर्गत अनुस्यूतानीति" एतद्विषये परं जैमिनिर्मुख्यत्वादिति" सूत्रविचारणायां द्रष्टव्यमिति । ते अर्चिरादिमार्गेण गताः पुरुषाः तेषु ब्रह्मलोकेषु परानिरतिशयानन्दपरमैश्वर्यादिसम्पन्नाः परावतः सनाथाः । परमेश्वरेण सनाथाः सन्तः परमेश्वरानुग्रहेणानुगृहीताः परमेश्वर-

तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः ॥१५॥

अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मा-

कृपाप्राप्तभोगान् भुँजानाः सुखेन ब्रह्मलोकेषु वसन्ति निवासं कुर्वन्ति। ननु यथाकृतकर्माणः स्वकृतकर्मानुसारेण स्वर्गे निवसन्तोपि भोगेन कर्मक्षये पुनरावृत्तिभाजो भवन्ति । "तद्यथेह कर्मचितो लोकः क्षीयते" "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्तीति" श्रुतिस्मृतिभ्याम् एवंमतब्रह्मलोकस्यापि पुनरागमनं स्यादिति शंकायामाह—

( तेषां न पुनरावृत्तिरिति ) तेषामर्चिरादिमार्गेण ब्रह्मलोकगतानां पुरुषाणां ब्रह्मलोकेभ्यो न पुनरावृत्तिर्भवति । ब्रह्मलोकेभ्यस्ते न पुनरावर्तन्ते परमेश्वरप्रसादबललब्धाः न स पुनरावर्तते इति श्रुत्यन्तराच्च । ततो ब्रह्मलोकगतानां कदापि संसारबन्धनं न भवति सर्वदैव ते विमुक्ता भवन्ति संसारपाशेभ्य इति ॥१५॥

अथ ये ब्रह्मोपासनातो विरतास्तेषां कीदृशी गतिर्भवति तत्राह—

( अथ ये यज्ञेनेत्यादि ) ये पुरुषाः प्रत्यगात्मानं ब्रह्मात्मकं वा प्रत्यक्शरीरकं ब्रह्म तदुपासनमकृत्वैव यज्ञेन सोमादिना दानेन गवादित्यागलक्षणेन तपसा कामान् शतं तपः नतु सर्वथाऽनशनम् मरणात् नापि चान्द्रायणादिकं धातुवैषम्यापत्तेः व्रतस्नादृशेन तपसा । यज्ञदानादिषु रताः सन्तो लोकान् जयन्ति प्राप्नुवन्ति ते यज्ञादिषु रताः पुरुषाः धूममभिविशन्ति दक्षिणेन मार्गेण गच्छन्ति धूमाभिमानिनीं देवतां गच्छन्तीत्यर्थः ततो धूमात् धूमाभिमानिदेवतातो रात्रिं तदभिमानिनीं देवतां गच्छन्ति । सर्वत्र रात्र्यादिशब्दास्तत्तदभिमानिदेवतापरकाः ततः कृष्णपक्षं ततो मासं मासेभ्यः पितृलोकम् पितृलोकाच्चन्द्रं प्राप्नुवन्ति । ततस्ते

**सान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत्पर्य्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं**

चन्द्रलोकं प्राप्यान्नं भवति । चन्द्रलोकस्थिता आजानदेवानां ते भोगोपकरणा भवन्तीतिभावः । तत्र चन्द्रलोके ते आजानदेवा भक्षयन्ति यथा सोमं राजानं यज्ञादौ ऋत्विगादय आप्याय स्वापक्षीयस्वेति कृत्वा भक्षयन्ति एवमेवानेनैव प्रकारेण एनान् धूमादिना चन्द्रलोके गतकर्मिणस्तत्र चन्द्रलोका देवा भक्षयन्ति—

( आप्याय स्वापक्षीयस्वेति ) अपक्षीणात् पुनराप्यायन्ति आप्यायितानां भक्षणेन क्षपयन्ति । एवमेव देवा अपि चन्द्रलोकगतान् भोगोपकरणभूतान् यज्ञादिकारिणः पुनः पुनर्विश्रामयन्तः स्वभोगोपकरणान् कुर्वन्तीत्यर्थः अत्र भक्षणं न चर्वणात्मकम् "न हवैदेवा अश्नन्ती" ति श्रुतेः किन्तु स्वभोगोपकरणीकरणमेव "एतदेवामृतं दृष्ट्वा तृप्यन्ती" ति श्रुतेः । अतो नृत्यगीतादिप्रदर्शनद्वारा आजानदेवान् ते कर्मिण उपकुर्वन्तो भोगोपकरणतामेव गच्छन्ति तदेव तद्भक्ष्यत्वमिति । तेषां मृतादिकर्मिणां यदा यस्मिन् काले तत् स्वर्गीयभोगनिमित्तं कर्म पुण्यलक्षणं पर्यवैति परिगच्छति विनश्यतीत्यर्थः तदा इमं भूताकाशमेवाभिनिष्पद्यन्तेऽतिसूक्ष्मत्वादाकाशसाम्यं लभन्ते । यथा खलु लाक्षापिण्डोऽत्यन्तवह्निसंसर्गात् प्रलीनो भवति तथैव कर्मकारिणोपि स्वर्गप्रदकर्मणः विनाशे प्रलीना भवन्तः सूक्ष्माकाशसमानतां लभन्ते इति भावः । ततः स कर्मी आकाशाद्वायुमभिनिष्पद्यते । अत्रापि कर्मिणो न वायुतादात्म्यं भजतेऽसम्भवात् किन्तु वायु-

**प्राप्यान्नं भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान् प्रत्युत्थायिनस्त एवमेवानुपरिवर्त्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकं ॥१६॥**

सादृश्यमेव लभन्ते इति । ततो वायोर्वृष्टिमभिनिष्पद्यन्ते वृष्टेः पृथिवीमभिनिष्पद्यन्ते ततस्ते कर्मिणः पृथिवीं पृथिव्याः सम्बन्धे प्राप्यान्नं भवन्ति व्रीहियवादिलक्षणान्नस्य संसर्गवन्तो भवन्ति नतु तत्तत्तादात्म्यं प्राप्नुवन्ति । ततस्ते कर्मिणो गृहीतान्नसंसर्गाः ततः परमपुरुषाग्नौ पुरुषलक्षणेऽन्ने हूयन्ते हुता भवन्ति पुरुषेणाद्यन्ते इत्यर्थः ततस्ते कर्मिणे योषाग्नौ स्त्रीलक्षणेऽग्नौ रेतोलक्षणाभिराहुतिभिर्हुताः सन्तः पुरुषरूपा जायन्ते पुरुषरूपेण समुत्पद्यन्ते इत्यर्थः ।

( ते लोकानित्यादि ) ते पुरुषा लोकान् पुण्यलोकान् पुण्यलोकान्प्रति उत्थायिन उत्थानशीला भवन्ति । पुनरपि पुण्यजनककर्मणि कृतबुद्धयो भवन्ति अनुष्ठानतत्परा जायन्ते इत्यर्थः । ते कर्मिण एवं यथोक्तप्रकारेणानुपरिवर्तन्ते गमनागमनं कुर्वन्तीति । एतावता तृतीयपंचमप्रश्नयोरुत्तरं प्रतिपादितं भवतीति । योहि देवयानेन पथा गच्छति तस्य ब्रह्मलोकप्राप्तिर्भवति यस्तु कर्मी कर्म कृत्वा धूमादिदक्षिणपथा गच्छति तस्य चन्द्रलोक प्राप्त्या आवागमनं भवति संसारे इति प्रदर्शितम् यस्तु एतन्मार्गद्वयं न जानाति तस्य कीदृशी गतिर्भवतीति दर्शयितुमाह—

( अथ य एतावित्यादि ) अथ ये प्राणिवर्गा एतौ पन्थानौ देवयानपितृयाणमार्गद्वयम् न विदुर्न जानन्ति विद्याकर्मरहितत्वात् मार्गद्वयाधिकारिणो न भवन्तीत्यर्थः ते पुरुषाः कीटा भवन्ति पतङ्गाः पक्षिणो वा भवन्ति यदिद दन्तशूकम् । कीटपतंगदन्तशूकदंशमशकादिरूपेण पुनः पुनर्भवन्ति इहैवलोके मृत्वा पुनर्भवन्ति एतावता क्रमेण सर्वप्रश्नानां यथायथ-

इति बृहदारण्योकोपनिषदि षष्ठाध्यायस्य
द्वितीयं ब्राह्मणम् ।।२।।

# अथ षष्ठाध्यायस्य तृतीयं ब्राह्मणम्

स यः कामयेत महत्प्राप्नुयामित्युदगयनआपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमपसद्व्रती भूत्वा औदुम्बरे कंसे चमसे वा सर्वौषधं मुत्तरं प्रदत्तमिति ।।१६।।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
षष्ठाध्यायस्य द्वितीयं ब्राह्मणम् ।।२।।

इदमीयद्वितीयब्राह्मणेन ज्ञानात्कीदृशी गतिर्भवति कर्मणा च कीदृशीमतिर्भवतीति प्रतिपादितम् । तत्र यदिदं यागादिकं कर्म तत् धनसाध्यम् । नाकिंचनो मादृशो बहुवित्तसाध्यं कर्म कर्तुं प्रभवति धनवता च सम्पादयितुं शक्यते एतावतोऽन्वयव्यतिरेकाभ्यां कर्मोपायत्वं वित्तस्य । तद्वित्त महत्व ( चमत्कार ) सपाद्यमिति वित्तप्राप्त्युपायभूतमहत्त्वस्य प्राप्त्यर्थं मंथाख्यं कर्म तद्दर्शयितुं तृतीयं ब्राह्मणमारभमाणः प्राह—

( स यः कामयते इत्यादि ) स यः कश्चित्कर्माधिकारी पुरुषः महत् अहं लोके महान् स्याम् इत्येवं कामयते इच्छति सः पुरुषः उदगयने आदित्यस्योत्तरयणे आपूर्यमाणपक्षस्य शुक्लपक्षपुण्याहेऽनुकूलदिने द्वादशाह द्वादशदिनपर्यन्तं कर्मारम्भदिनात् उपसद्व्रती उपसत्सु प्रसिद्धं यद् व्रतम् दुग्धमात्रभक्षणात्मकम् व्रतम् तादृशव्रतवान् भूत्वा पयोमात्राहारीभूत्वा औदुम्बरे उदुम्बरकाष्ठनिर्मिते चमसे चमसाकारे कंसेकंसाकारे वा अत्र विकल्प आकारे न तु औदुम्बरे विकल्पः औदुम्बरे पात्रे सर्वौषधं सर्वौषधीनां यथा सम्भवमिलितानां ग्राम्याणामित्यर्थः फलानि यथासंभवफलान्याहृत्य तथा तदन्यदपि यत्सम्भरणीयं तत्सर्वं संभृत्य तत्र संस्थाप्य ततो भूमि

**कलानीति सम्भृत्य परिसमूह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्य्यावृताज्यं संस्कृत्य पुंसा नक्षत्रेण मन्थं सन्नीय जुहोति यावन्तो देवास्त्वयि जातवेदस्तिर्य्यञ्चो घ्नन्ति पुरुषस्य कामान् तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा। या तिरश्ची निपद्यतेऽहं विधरणी इति तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा ॥१॥**

**ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति श्रोत्राय**

परिसमूह्य कुशैर्भूमिं संमार्जयित्वा परिलिप्य गोमयादिना अनुविलिप्य। अत्र परिसमूहनमनुलेपनं च भूमेः संस्कारः, ततोऽग्निमुपसमाधाय स्मार्तमग्निं स पुरतः कुण्डादौ स्थापयित्वाऽग्निस्थापनं कृत्वा कुशैस्तमग्निं परिस्तीर्य परिस्तरणमग्नेः कृत्वा आवृताज्यं स्मृतिप्रतिपादितप्रकारेण घृतं संस्कृत्याऽऽज्यसंस्कारं कृत्वेत्यर्थः। पुंसा नक्षत्रेण पुरुषसंज्ञके प्रशस्ते नक्षत्रे मन्थं सर्वौषधिसंभृतं संनीय संस्कृताग्निसमीपे आनीय यावन्तो देवास्त्वयीत्यादि वक्ष्यमाणमंत्रचतुष्टयेन घृतद्वारा जुहोति वह्नौ आहुतिं प्रयच्छति।

( यावन्त इत्यादि ) हे जातवेदो वह्ने ! आहूयमाने त्वयि यावन्तो देवादयः पुरुषस्य कामान् घ्नन्ति कामविनाशका भवन्ति तेभ्यः सर्वेभ्योऽहं भागधेये भागं जुहोमि ते स्वभागप्राप्त्या तृप्ताः सन्तस्तेमा मां सर्वैः कामैः तर्पयन्तु इति स्वाहा ॥१॥

अनेन मन्त्रेणाहुतिं दत्वा पुनरपि ज्येष्ठाय स्वाहेत्यादिनाहुतिं दत्वा मन्थे संस्तव मवनयति। वह्नेः पश्चात् भागे स्थिते मन्थे हुत्वावशिष्टमाज्यं

स्वाहा यतनाय स्वहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सस्रवमवनयति ।।२।।

अग्नये स्याहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति सर्व्वाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति । ३।।

अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि हिङ्क्रियमाणमस्युद्गीथमसि उद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे सन्दीप्तमसि विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि संवर्गोऽसीति ।।४।।

अथैनमुद्यच्छत्यामं स्यामंहि ते महि सहि राजेशानोऽधिपतिः स मां राजेशानोऽधिपतिं करोत्विति ।।५।।

निनयेत् । अतः परमाहुतिद्वयं दत्वा संस्रवनिनयनं कुर्यादिति प्राणाय स्वाहा– इत्यारभ्य प्रजात्यै स्वाहेत्यन्तमन्त्रैराहुतिं दत्वा संस्रवनिनयनं कुर्यादिति ।।३।।

अथैनमभिमृषति तत्राभिमर्शनमंत्रं दर्शयति—

( भ्रमदसीत्यादि ) ।।४।।

( अथैनमुद्यच्छति ) हुतावशिष्टद्रव्यभक्षणाय वक्ष्यमाणमंत्रेण मन्थं हस्तेन गृह्णातीति । आमं स्याममित्यादिमत्रः । अथैनं हुत्वावशिष्टद्रव्य-

अथनमाचामति तत्सवितुर्वरेण्यं मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः स्वाहा भर्गो देवस्य धीमहि मधुनक्तमुतोषसो मधुमत्पार्थिवंरजः मधुद्यौरस्तु नः पिता भुवः स्वाहा धियो यो नः प्रचोदयात् मधुमान्नो वनस्पतिर्मधुमां २ अस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः स्वः स्वाहेति सर्व्वाञ्च सावित्री-मन्वाह सर्व्वाश्च मधुमतीरहमेवेदं सर्वं भूयासं भूर्भुवः स्वःस्वाहे-त्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्छिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्ड-रीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वंशं जपति ॥६॥

तं हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः

माचामति वक्ष्यमाणमंत्रैर्भक्षयति तत्सवितुरित्यादि । जघनेनाग्निं प्राक्शिराः संविशतीति जघनेनाग्निमर्थात् अग्नेः पश्चाद्भागे प्राक्शिराः पूर्वदिशि मस्तकं कृत्वा संविशति शयीतेति । ततोऽग्नेः पश्चादुपविश्य वंशं जपेत् वंशं ब्रह्मणे जपेत् प्रातः सन्ध्यादिकं कृत्वा मंत्रेण सूर्योपस्थानं कुर्यादि-त्यर्थः ॥६॥

( तं हैतमित्यादि ) नाम्नोद्दालक अरुणिररुणपुत्र आचार्यः अन्तेवासिने स्वशिष्याय वाजसनेयाय याज्ञवल्क्याय तं हैतम् यथोक्तकर्मा-नुष्ठानप्रकारमुक्त्वा कथयित्वा उवाचान्यदपि किमपि प्रोवाच किमुवाच तत्राह—

( अपि चेत्यादि ) यः प्रकृतकर्मकर्ता पुरुषः एनं संस्रवसंस्कृतं मन्थम् शुष्के गतप्राणे स्थाणौ निषिंचेत् प्रक्षिपेत् तदा तत्र गतप्राणोपि स्थाणौ शाखा अवयवा जायेरन् पुनरपि भवेयुः पलाशानि पत्राणि च प्ररोहेयुः

प्ररोहेयुः पलाशानीति ॥७॥

एतमुहैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥८॥

एतमुहैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥९॥

एतमुहैव चूलो भागवित्तिर्जानकाय आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥१०॥

एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥११॥

एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतन्नापुत्राय वानन्तेवासिने वा ब्रूयात् ॥१२॥

चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर

समुत्पद्यन्ते यदा शुष्के तद्वृक्षे इयं स्थितिस्तदाका कथा जीवतीति ॥७॥

एवमु हैव वाजसनेयो याज्ञवल्क्य इत्यारभ्य सत्यकामो जाबाल एतत्पर्यन्त ग्रंथः सम्प्रदायप्रदर्शकः ।

( ना पुत्रायेत्यादि ) पुत्ररहिताय शिष्यरहिताय चेयं विद्या न देया यद्यपि विद्याधिगमे षट् तीर्थानि तथाप्यत्र द्वे एव तीर्थे अनुज्ञायेते पुत्रश्चान्तेवासी चेति ॥१२॥

इध्म औदुम्बर्य्या उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान् पिष्टान् दधनि मधुनि घृत उपसिञ्चत्याज्यस्य जुहोति ॥१३॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य
तृतीयं ब्राह्मणम् ॥३॥

# अथ षष्ठाध्यायस्य चतुर्थं ब्राह्मणम्

एषा वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥१॥

स ह प्रजापतिरीक्षाञ्चक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स

( चतुरौदुम्बरो भवतीति ) तदिदमिदमौदुम्बर चातुर्विध्यं दर्शयति—

( औदुम्बरः स्रुव इत्यादि ) दशधान्यानि ग्राम्याण्यपि संग्राह्याणि तद्दर्शयति—

( व्रीहि यवा इत्यादि ) खल कुलाः कुलित्था अन्यत्सर्वं स्पष्टम्

( तान् पिष्ट्वेत्यादि ) दध्यादिभिरुपसिच्य पिष्ट्वा पेषणं कृत्वाज्येनाग्नौ जुहोतीति ॥१३॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

यादृशविशिष्टपुत्रद्वारा पित्रा यं लोको जेतव्यो भवति तादृशविशिष्टपुत्रोत्पादकं कर्म दर्शयितुं चतुर्थं ब्राह्मणमारभते ।

( एषां वै इत्यादि ) एषां परिदृश्यमानानां भूतानां प्राणिनां पृथिवी रसः सारभूतः ।

( पृथिव्या रस आप इत्यादि ) पुरुषस्य रसो रेत इति ॥१॥

( स ह प्रजापतिरित्यादि ) स प्रजापतिरीक्षांचक्रे विचारं कृतवान्

स्त्रियं ससृजे तां सृष्ट्वाऽध उपास्त तस्मात्स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत तेनैनामभ्यसृजत ॥२॥

तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्म्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासञ्चरत्यासां स्त्रीणां सुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासञ्चरत्यस्य स्त्रियः सुकृतं वृञ्जते ॥३॥

अस्मै रेतसे प्रतिष्ठां रेतसः स्थित्यर्थं भोग्यं स्थानं स्त्रीरूपं कल्पयानीति। ततः स स्त्रियं ससृजे उत्पादितवान् सृष्ट्वाचायं उपासते तस्मादद्यापि मिथुनाख्यकर्मणि क्रियमध उपासीतेति । मिथुनीकरणस्य वाजपेययागफलप्राप्त्यर्थं वाजपेयसम्पत्ति दर्शयति ।

( स एतमित्यादि ) कठिनत्वसाधर्म्यात् ग्रावा पुरुषलिंगम् तमात्मनः पुंलिगं प्राञ्चं प्राग्रं स्त्रीलिंगं प्रति स्त्रीलिंगे इत्यर्थः स मुदमारभत् पूरितवानित्यर्थः तेन पुंलिगेन एनां स्त्रियम् अभ्यसृजत् संसर्गं कृतवान् इति ॥२॥

(एतस्यावेदि रित्यादि ) तस्या स्त्रिय उपस्थ एव वेदिः तद्गतानि-लोमान्येव बर्हिः केशाः चर्माधिषवणे अधिषवणफलके मुष्कौ समिद्धोग्नि-र्योनिमध्यत इति । वाजपेयेन यागेन यावान् लोकोयजमानस्य प्राप्तो भवति। तावानेव लोको भवति य एव विद्वान् विजानन् अधोपहासं स्त्रिया सह मैथुनं चरति विलक्षणफलप्रयोजकत्वात् यथोक्तकर्मणि बीभत्सा न कार्या। य एवं विद्वानधोपहासं करोति स पुरुष आसां स्त्रीणां सुकृतं वृङ्क्ते आमर्जयति इति । अथ यो विद्वान् वाजपेय प्रकाराऽनभिज्ञोऽधोपहासं स्त्रिया सह मैथुनं चरति अस्य पुरुषस्य यो सुकृतं स्त्रिय एव वृजते प्राप्नुवन्तीत्यर्थः ॥३॥

एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहैतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान् कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति य इदमविद्वांसोऽधोपहासञ्चरन्तीति बहु वा इदं सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥४॥

तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥५॥

अथ यद्युदक आत्मानं परिपश्येत्तदभिमन्त्रयेत मयि तेज

( एतद्धेत्यादि ) एतत् कर्मविद्वानुद्दालकः नाकोमौदगल्यः कुमारहारीतश्चेति वक्ष्यमाणप्रकारेणतदाहुरिति किमाहुस्ते तत्राह—

( बहवो मर्या त्यादि ) ये अविद्वांस एतत्प्रकारज्ञानरहिताः सन्त इदं मैथुनाख्यमधोपहासं चरन्ति कुर्वन्ति ते मर्या मरणधर्माणो भवन्ति तथा ब्राह्मणायना ब्रह्मबन्धवो जात्यैव ब्राह्मणा न तु कर्मणा । निरिन्द्रिया नपुंसका ज्ञानकर्मबलहीना वा भवन्ति । तथा विसुकृतः सुकृतरहिताः बहवोऽनेकप्रकाराः एतादृशा भवन्तोऽस्मात् लोकात् प्रयन्ति परलोकादपि भ्रष्टा भवन्तीति । यथोक्तविद्यासम्पन्नस्य अल्पं बहु वा सुप्तस्य जाग्रतो वा यदि इदं रेतो वीर्यम् स्कन्दति स्खलति ॥४॥

( तदभिमृशेदित्यादि ) तदभिमृशेदमुमत्रयेत वास्कन्नस्य रेतसः अभिमर्शनं वा अनुमत्रणं वाग्रे वक्ष्यमाणमन्त्रेण कुर्यात

( यन्मेद्य रेत इत्यादि ) मत्रेणानामिकांगुष्ठाभ्यां पतितं रेतो गृहीत्वा पुनर्मामिति मंत्रेण स्तनमध्ये वानिमृज्यादिति ॥५॥

इन्द्रियं यशो द्रविणं सुकृतमिति श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वा-साास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥६॥

सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात् सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥७॥

सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति यश-स्विनावेव भवतः ॥८॥

स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्संभवसि हृदयादधि-जायसे स त्वमङ्गकषायोसि दिग्धविद्धामिव मादयेमाममूं

( अथ यद्युदके इत्यादि ) यदि कदाचिदयं विद्वानुदके जले आत्मानं पश्येत् स्वप्रतिबिम्बं पश्येत्तदा मयि तेज इत्यादि मंत्रेणात्मानमभिमन्त्रयेत् इति ।

( श्रीर्हवेत्यादि ) स्त्रीणां मध्ययामलोद्‌वासा रजस्वला भवति एषा श्रीरिवात्युत्कृष्टेति यत इयं श्रीः तस्मात् मलोद्वाससं रजस्वलां य यशस्विनी-मभिगम्य तत्समीपं गत्वा तामुपमंत्रयेतेति सा च प्रार्थितापीय यदि प्रार्थयितारमभिलषितं न दद्याद् तदा अवक्रीणीयात् आभरणादिप्रदानेन तां वशीकुर्यादित्यर्थः । सा आभरणादिप्रदानेनाप्यभिलषितं न दद्यात्तदा यष्ट्यादण्डेन पाणिनावोपहत्य पीडयित्वा इन्द्रियेण मन्त्रेणातिक्रामयेदति-क्रम्य गच्छेत् तदनन्तर पुनः सा रजोवती न भवतीति भावः । सा चेत् अस्मै अभिलषितं प्रयच्छति तदा द्वावपि यशस्विनौ भवत इति ॥८॥

( स यामित्यादि ) स वाजपेय प्रकाराभिज्ञो यां स्वीयां पत्नी-मिम् कामयेत इच्छेत् तस्यामर्थं निष्ठायेत्यादिकपदयोजनं स्वयमेवोहनीय-

मयीति ॥९॥

अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥१०॥

अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥११॥

अथ यस्य जायायै जारः स्यात्तं चेद् द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमं शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषी पुत्र पशूंस्त आददेऽसाविति मम

मिति ॥१२॥

( अथ यामिच्छेदित्यादि ) इयं गर्भिणी मा भवतु इति यामिच्छेत्सा गर्भं न धारयतीत्यर्थः

( तस्या गर्भमित्यादि ) पूर्ववदेव व्याख्येयम् अभिप्राण्यापान्यात् प्रथमं श्वासमादाय ततो विसृजेदित्यर्थः अन्यत्सर्वमतिरोहितार्थम् ॥१०॥

( अथ यामिच्छेदित्यादि ) अपान्याभिप्राण्यात् अत्र प्रथममपाननं ततो भिप्राणनमन्यत्सर्वं पूर्ववदिति ॥११॥

( अथ यस्य जायायै इत्यादि ) यस्य जायायै पत्न्या जार उपपतिर्भवेत् सचोपरतिस्तं द्विष्यादेनाहंरिष्यामीति तदा आपपात्रे अग्न्याधानं कृत्वा सर्वं कर्म प्रातिलोम्येन संपाद्यशरमयं बर्हिस्तीर्त्वा तदग्नौ आज्येनाक्ताः शरेषिकाः मम समिद्धे इत्यादि मन्त्रान्ते शत्रोर्नाम गृहीत्वा हवनं कुर्यात् । एवं विद् ब्राह्मणो यमुद्दिश्य शापं ददाति स निरिन्द्रियः

समिद्धेऽहौषीरिष्टासुकृते त आद्ददेऽसाविति मम समिद्धे-
ऽहौषीराशापराकाशौ त आद्ददेऽसाविति स वा एष निरिन्द्रियो
विसुकृदस्माल्लोकात्प्रैति यमेवं विद्वान् ब्राह्मणः शपति तस्मादेवं-
विच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥१२॥

अथ यस्य जायामार्तवं विन्देत् त्र्यहं कंसेन पिबेदहतवासा
नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रान्त आप्लुत्य व्रीहीनव-
घातयेत् ॥१३॥

स य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्व्वमायुरि-
यादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित
वै ॥१४॥

अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदा-
वनुब्रुवीत सर्व्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तम-
श्नीयातामीश्वरौ जनयित वै ॥१५॥

अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन् वेदान-
नुब्रुवीत सर्वमायुरियादित्युदोदनं पाचयित्वा सर्पिष्मन्तमश्नीयाता-
मीश्वरौ जनयित वै ॥१६॥

पुण्यरहितः सन् म्रियते इति भावः। यस्मादेवं तस्मादेवं विदः श्रोत्रियस्य पत्न्या सह नोपहासं कुर्यादिति किं चैवं वित् तस्य शत्रुर्भूत्वा तममभिचरतीति भावः ॥१२॥

( अथ यस्य जायामित्यादि ) अथ यस्येत्यादि स्पष्टम् वृषलो जात्या शूद्रः वृषलीशूद्रा नोपहन्यात् न स्पृशेत्ताम् आप्लुत्य त्रिरात्रे स्नात्वा स्नातां तां व्रीहिनवघातयेत् व्रीह्यवहननाय नियुंज्यादिति भावः।

( स य इच्छेदित्यादि ) स्पष्टोर्थः उदोदनं उदकौदनं शुद्धौदनं सर्पिष्मा

अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्व्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौजनयित वै ॥१७॥

अथ य इच्छेत्पुत्रो मे पण्डितो विजिगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायते सर्व्वान्वेदाननुब्रुवीत सर्व्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित वा औक्ष्णेन वा ऋषभेण वा ॥१८॥

अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रफर्व्यां सञ्जायां पत्या सहेति ॥१९॥

अथैनामभिपद्यतेऽमोहमस्मि सा त्वं सा त्वमस्यमोऽहं सामाह-

संयुक्तमश्नीयादन्यत्सर्वं स्पष्टम् ॥१४।१५।१६॥

(अथ ये इच्छेद्दुहितेत्यादि) पुत्र्याः पाण्डित्यं व्यावहारिकगृहादिकार्ये नैपुण्यं न तु वेदज्ञात्वं पाण्डित्यं वेदेऽनधिकारात् स्त्रिया इति ॥१७॥

(अथ य इच्छेत्पुत्र इत्यादि) स्पष्टार्थः औक्षेणेत्यत्रोक्षारेतः शेचनशक्तिसम्पन्नो वृषभः ऋषभस्ततोप्यधिकवया इति भावः ॥१८॥

(अथभिप्रातरेवेत्यादि) अन्यस्मिन्दिने प्रातः समये एव । स्थालीपाकावृता स्थालीपाकस्य यो विधिस्तेन विधिना आज्यं घृतं संस्कृत्य जुहोति स्वाग्नमंत्रैरिति भावः उत्तिष्ठेति मन्त्रेण पत्न्यास्त्रिवारं प्रोक्षणं कर्तव्यमिति ॥१९॥

(अथैनामभिपद्यते इत्यादि) अमोहमस्मीति मन्त्रेण पत्नीसंगच्छेते-

मस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि संरभावहै सहरेतो दधावहै पुंसे पुत्राय वित्तय इति ।।२०।।

अथास्य ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ।।२१।।

हिरण्मयी अरणी याभ्यां निर्म्मन्थतामश्विनौ तन्ते गर्भं हवामहे दशमे मासि सूतवे यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेसाविति ।।२२।।

सोष्यन्तीमद्भिरभ्युक्षति यथा वायुः पुष्करिणीं समिञ्जति सर्व्वतः एवा ते गर्भ एजतु सहावैतो जरायुणा इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः तमिन्द्र निर्ज्जहि गर्भेण सावरां सहेति ।।२३।।

जातेऽग्निमुपसमाधायाङ्क आधाय कंसे पृषदाज्यं सन्नीय पृषदाज्यस्योपघातं जुहोत्यस्मिन् सहस्रं पुष्यासमेधमानः स्वे गृहे अस्योपसद्यां मा छैत्सीत् प्रजया च पशुभिश्च स्वाहा मयि प्राणां-स्त्वयि मनसा जुहोमि स्वाहा यत्कर्मणात्यरीरिचं यद्वा न्यूनमिहाकरं अग्निष्टत्स्विष्टकृद्विद्वांत्स्विष्टंसुहुतं करोतु नः स्वाहेति ।।२४।।

अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधिमधु-घृतं सन्नीयानन्तर्हितेन जातरूपेण प्राशयति भूस्ते दधामि भुवस्ते

ति भावः ।।२०।।

( अथास्य इत्यादि ) अनुलोमां शिर आरभ्येत्याद्यर्थः स्वयमे वोहनीयः । विष्णुर्योनिं कल्पयतु इत्यारभ्य जातेग्निमिति मंत्रचतुष्टयस्य

दधामि स्वस्ते दधामि भूर्भुवःस्वः सर्वं त्वयि दधामीति ॥२५॥

अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥२६॥

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोऽभूर्य्यो रत्नधा वसुविद्यः सुदत्र येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेकरिति ॥२७॥

अथास्य मातरमभिमन्त्रयते इलासि मैत्रावरुणी वीरे वीरमजीजनत्सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरदिति तं वा एतमाहुरति पिता बताभूरति पितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥२८॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य
चतुर्थं ब्राह्मणम् ॥४॥

व्याख्यानं स्वयमेवोहनीयम् ॥२१।२२।२३।२४।२५।२६।२७॥

( अथास्यमातरमित्यादि ) एवं विदो ब्राह्मणजातः समुत्पन्नः पुत्रः पितुरपेक्षयोत्कृष्टो भवति पितामहापेक्षयाप्यतिशयितो भवति स्तुत्यानां सर्वेषामतिक्रमणं करोति अतिशयेन स्तुत्यो भवतीति भावः ॥२८॥

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

# अथ षष्ठाध्याये पंचमं ब्राह्मणम्

अथ वंशः पौतिमाषीपुत्रकात्यायनीपुत्रात् कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरी-

मस्तप्रवचनवंशपरंपरां दर्शयितुमाह । अथवंशः इति प्रकरणोप-

पुत्रात् पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रः कौशिकीपुत्रात् कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥१॥

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्त्तभागीपुत्रादार्त्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात् साङ्कृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभतीपुत्राद्वैदभतीपुत्रः कार्शकेयीपुत्रात् कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात् प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात् साञ्जीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥२॥

याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात् कश्यपाद्धरितः कश्यपः शिल्पात् कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥३॥

संहारात् स्त्रीप्रधानत्वात् गुणवान् पुत्रो भवतीत्युपसंहारेण ज्ञातम् तस्मात् स्त्रियो विशेषणेव पुत्रस्य विशेषणादाचार्यं वरं कीर्तिता भवति । ब्रह्म-

समानमासाञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूका-
यनिर्माण्डव्यान्माण्डव्यः कौत्सात् कौत्सो माहित्थेर्माहित्थिर्वामक-
क्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः
कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्काव-
षेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे
नमः ॥४॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य
पञ्चमं ब्राह्मणम् ॥५॥

इति वाजसनेयके बृहदारण्यकोउपनिषत्सु सष्ठोऽध्यायः समाप्तः ॥

इति बृहदारण्यकोपनिषत् ॥१०॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

स्वयंभूः स्वयं भवतीति इतरोपदेशानपेक्षः ब्रह्मणे नमो नमस्कारो भवतु। एतावता चरमेपि मंगलं प्रस्तुतम्। आदिमध्यावसानेषु कृतमंगला ग्रन्था लोके प्रचारिणो भवन्ति अध्येतारश्च दीर्घायुष्का भवन्तीति कृत्वा चेदं मंगलमिति।

इति बृहदारण्यकोपनिषदि आनन्दभाष्ये
षष्ठाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

इति श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता

# बृहदारण्यकोपनिषत् समाप्ता।